प्रभूतानां भव्यदेहिनां परमोपकारमादधाति स्म । सौम्यशान्तमुखमुद्रा च शान्तिजलवर्षणेन त्रिविधतापतप्यमानानां मनसि परां शान्तिमापादयति स्म । तैर्विरचितानि प्रसादगुणविशिष्टानि काव्यानि भव्यान् झटित्येव शर्मनोतिपथिकान् विदधाति स्म । लेखन-कार्यमपि सततं धाराप्रवाहरूपेण प्राचलत् । तन्निर्मिताश्च मुद्रिता अमुद्रिताश्च बहवो ग्रन्था विद्यन्ते । तथाहि—भीमसेनचरित्रं, अजितसे-नचरित्रं, चन्द्रराजचरित्रं स्तुतयः श्रीशोभनस्तुतेष्टीका, धर्मशर्माभ्युदय—नेमिनिर्वाण—तिलकमञ्जरी—शान्तिनाथचरित्रादिमहाकाव्यानां टीकाः, शब्दसिंधुः, बुद्धिप्रभाव्याकरणं, सुभाषितसाहित्यं, बुद्धिसागरसूरिचरित्रं, श्रीकल्पसूत्रसुखबोधिका टीकाश्चेति गीर्वाणगिरा गुम्फिता वर्तन्ते । कृतिश्चैषां मनोहारिणी सुगमा रसमयी च । वेदान्ततत्त्वमपि ग्रन्थद्वारा व्यक्तीकृतम् । वेदान्तरहस्यञ्च काव्य—प्रबन्धेन गुर्जरगिरा बहुधा विशदीकृत्य प्रकाशितम् । तच्च समयोचितभावमयं हृल्लासकं जनानानन्दयति । सुपार्श्वनाथचरित्र—सुरसुन्दरीचरित्र—कुमारपाल-चरित्रादीनां भाषान्तराणि तद्रचितानि मुद्रितानि विद्यन्ते इत्थं तैःसूरिवरैःसाहित्यविद्भिर्विशेषतो विहिता । तेषामीदृशीं शक्ति विवि-धाऽपरगुणांश्च समुद्वीक्ष्य तुष्टैराचार्य श्रीमद्बुद्धिसागरसूरिवरेण्यैः उत्तरगुर्जरस्थे प्रान्तिजपुरेऽशीत्युत्तरैकोनविंशतिशततमेऽब्दे आचार्य-पदमुपहारीकृतं, सागरसंघाटकधूरपि समर्पिता । तां धुरं चिरं वहन्तस्तेऽजितसागरसूरिवराः श्रमणगणानां धर्मपथप्रदर्शकाः सन्तः परमोपकारं विदधति स्म । मुनिवृन्दे ऋजुस्वभावाः प्रेमवन्तः समदर्शिनः धर्माभ्युदयसमर्थका आसन्निति तु तेषां कार्यजातैः सुप्र-सिद्धमेव । परोपकाररसिका—स्वपरसङ्घाटकगच्छमतानपेक्षकास्ते मुनिश्रीऋद्धिसागर—मुनिश्रीरंगविमल—मुनिश्रीकीर्तिसागर—मुनिश्रीदुर्लभविजय—दानसागराऽऽदिभ्यो पंन्यासपदं महता हर्षेण वितरन्ति स्म । बहुभ्यः साधुभ्यः साध्वीभ्योऽपि दीक्षां महा-

दीक्षां समर्पितवन्तः, अर्हत्प्रतिष्ठा–गुरुमूर्तिप्रतिष्ठो–द्यापनो–पधानवहनादिधार्मिकक्रियाः संसाधयन्तः क्षान्त्यादियतिधर्मसम्पालयन्तः पञ्चाशीत्युत्तरैकोनविंशतिशततमे विक्रमसंवत्सरे (१९८५) आश्विनशुक्लतृतीयायामुत्तरगुर्जरवर्तिविद्यापुरेग्रामे समाधिपूर्वकं स्वर्गलोकं जग्मुः ॥ आचार्यश्रीमद्बुद्धिसागरसूरीश्वरचरणानां समाधिमन्दिरस्य पुरतः ( सम्मुखे ) तेषामग्निसंस्कारभूमौ स्तूपोऽधुनाऽपि दृग्गोचरीभवन् महात्मनां तेषां स्मरणं कारयत्येवेति शम् ।

उपाध्याय–हेमेन्द्रसागरः

## प्रस्तावना ।

"स्वदोषशान्त्या विहितात्मशान्तिः शान्तेर्विधाता शरणं जनानाम् । भूयाद् भवक्लेशभयोपशान्त्यै शान्तिर्जिनो मे भगवान् शरण्यः ॥ १॥" प्रकटयति विवेकज्योतिरात्मप्रदेशे, तदनु मनसि हेयाहेयदृष्टिं तनोति । निविडनिविडकर्म–ग्रन्थिभेदं करोति, दवयति कुविकल्पान् तच्छ्रुतज्ञानमीडे ॥ २ ॥ सुवर्णपात्रं प्रभवेत्सुवर्णात्–यथाऽयसश्चाऽयसभाजनं भवेत् । तथैव सद्ग्रन्थविलोकनाज्जनः, श्रेष्ठत्वमाप्नोति महीतले ध्रुवम् ॥ ३ ॥ सुविदितमितिसम्यक्शेमुषी भाग् जनानां जनिमृतिगहनानादुःखपूर्णे भवाऽब्धौ । असकृदपि वियोनौ प्राणिनो वै भ्रमन्तः, शिवसुखमधिगन्तुं सन्ति ते दृश्यमानाः ॥ ४ ॥ निरतिशयसुखं तत्कर्मणां मूलनाशात् नयति च परमात्माऽध्यक्षतो जीववर्गः । शिवपदमधिरोढुं कारणत्वेन शास्त्रे खलु चतुरनुयोगास्तीर्थकृद्भिः प्रदिष्टाः ॥ ५ ॥ चरण-

करणनाम्ना द्रव्यनाम्ना तथैवं, विदितगणितनाम्ना वा कथासंज्ञया च–इति चतुरनुयोगा आगमे वै प्रसिद्धाः व्यवहृति सुखलाभे हेतवः संभवन्ति ॥ ६ ॥ प्रथम इह वरेण्योऽन्ये तदर्थप्रयासाः इति कथयति सम्यग् ज्ञानदृष्ट्यादि सत्रम् । चरणकरणनामा तेन मुख्योपयोगी, तत इति गुणपुष्ट्यै सन्ति भूयः प्रबन्धाः ॥ ७ ॥ इतरतदनुयोगज्ञानवृद्धिं विधातुं प्रखरमतिभिरार्यैः संस्कृतो ग्रन्थराशिः अयमपि चरिताख्यः सर्वगम्यत्वहेतोः शिवमतिभिरुपादेयोऽस्ति बोधप्रदत्वात् ॥ ८ ॥ प्रकृतिनवनवानां मानवानां चरित्रं विदितमपि ततः स्यात् प्रायशो लाघवेन । असुकृतसुकृतोत्थे दुःखसौख्येऽपि विद्वान् अवगमयति लोके तादृशीभिः कथाभिः ॥ ९ ॥ प्रभवरहितमिथ्यात्वाऽऽश्रितानां जनानामतिशयकृशमेधाल्पायुषां साम्प्रतानाम् । सपदि जगति धर्माधर्मतत्त्वागमार्थं गुरुकथितकथातः साधनं नान्यदस्ति ॥ १० ॥ चरितविषयकानां पुस्तकानां प्रबन्धे तत इह मतिमन्तः प्रयो यत्नवन्तः । भवति विविधभेदाद्धर्मकामार्थमिश्रा श्रवणमननयोग्या सा कथा वै चतुर्धा ॥ ११ ॥ कथयति समवायाऽङ्गाभिधं यात्र सत्र–मिति कथनगतार्थाः पंचभेदाश्च ते स्युः । प्रथमचरमभेदौ त्याज्यकोटिप्रविष्टा–वतिशयविकथात्वात् हानिमात्रं ददाते ॥ १२ ॥ तदितरमुभयं तु श्रेयसः साधकत्वात् सुचरितपदवाच्यं धाम सर्वादराणाम् । चरितमपि तु मिश्रं बोधयद्धर्मतत्त्वं जनयति हृदि हर्षं तत्समर्थोपकारि ॥१३॥ अतिशयनिरवद्यां तां कथां संयमी वै विमलहृदयभागः संनिबद्धुं समर्थः । सुकृतपरिवृतात्मा येन निर्जरां प्राप्य येन क्षपितसकलकर्मा मोक्षधाम प्रयाति ॥ १४ ॥ शुभ इह परिणामः श्रोतृवक्त्रोरवश्यं श्रवणमननशान्तःकषायश्च भव्यः । अधिगतशुभतत्तत्साधनोऽल्पे-भवेऽसावमृतपदसमर्थो जायते केवली च ॥१५॥ चरित त इह देशस्यापि भद्रोपकारः रचयति बुधवर्गस्तेन हृद्यां कथां हि । उदयति

सुमतिस्तच्छुद्धसंस्कारयोगे व्यवहृतिनिपुणत्वं लभ्यते चापि लोके ॥ १६ ॥ जिनवरचरितैर्वा धर्मिणां जीवनीभिः परमशुचिवतीनां बोधदाऽऽदर्शवृत्तैः। अतिमृतसुकथाभिः शुद्धसंस्कारयोगो भवति सुमतिभाजामस्ति तन्निर्विवादम् ॥१७॥ भवति च शुभदेशाऽऽचाररक्षाकथाभिः सुपरिणतिसदाचाराऽऽदिकं लभ्यते च। त्रिविधगतिनिबद्धा जैनसाहित्यमध्ये प्रचुरतरकथास्ताहशमाना भवन्ति ॥१८॥ चरमभगवतः श्रीवीरनाथस्यकालादतिशयशुभभावादिप्रबोधोन्मुखाश्च । अगणितसुकथास्ताः संप्रवृत्ताः इहाऽऽसन् तदतिशयसमाना ज्ञातधर्माख्यपत्रे ॥ १९ ॥ अद्यापि यासांसुलभाः कियत्यः कथादरो वैव सुदेवहिण्ड्याम् । यावान्तदंशोऽप्युपलभ्यतेऽत्र महोपयोग्यस्ति समोऽपि तावत् ॥ २० ॥ लोकोत्तरा श्रीनरवाहनस्य तरंगवत्याश्च कथाविचित्रा कथाः पुनर्या मगधादिसेना सुलोचनाबन्धुमतीसुसत्काः ॥ २१ ॥ द्वासप्ततिर्वा हरिवंशनाम्नी कथा इमाः श्रोत्रसुखाय याश्च । प्राक्तन्य एवातिपुराणकालाचास्ताः कथाः संचलिता अभूवन् ॥ २२ ॥ श्रीपादलिप्ताभिधसूरिसम्राट्कीर्तिर्दिगन्तान् व्यतिलंघ्य चासीत् । स शासनोत्कर्षकरः प्रभावी नानाचमत्कारगुणैः प्रसिद्धः ॥ २३ ॥ प्रबन्धकेषु प्रतिभाप्रकर्षैर्विद्वद्गणेष्वाप समादरं यः । आचार्यवर्यस्य सुपूर्वकालादासीत्प्रसिद्धिर्नहि तत्र शङ्का ॥ २४ ॥ तत्सूरिणा प्राकृतभाषयेयं मिश्राकथाऽकारि तरंगलोला । सुबह्वऽलंकारयुताऽपि दुर्बोधत्वेन सा सर्वहिताय नाऽभूत् ॥ २५ ॥ गतेऽथ काले कियति क्रमेण लुप्तप्रचारा किल सा बभूव । श्रीबाणभट्टेना विनिर्मितायाः कादम्बरीनामकसत्कथायाः ॥ २६ ॥ गद्यात्मिकाया अपि पूर्वमेव श्रीसूरिणेयं रचिता कथाऽस्ति । प्राचीनताकारणतस्तु सेयं गृहेगृहे वाचयितुं हि योग्या ॥ २७ ॥ संस्कृतवाक् किल वासवदत्ता प्राकृतवाक् च तरंगवतीयम् । ते च परः शतवत्सरकाणि बागभरी श्रुति-

भूषण आस्ताम् ॥२८॥ सुविहितजिनभद्राख्या गणीन्द्राः पुराणाः स्वकृत इति विशेषाऽऽवश्यकस्याथ भाष्येः । वसुखशरशशाङ्काङ्केसुपद्ये (१५०८वा १५१६)। सुवाचा लिलिखुरपि तदस्या नाम सद्गौरवेण ॥२९॥ श्रुत्यब्धिसंख्योत्तरशक्रसंख्यशतप्रबन्धान्ननु ये प्रणिन्युः। तैः सूरिभिः श्रीहरिभद्रपादैरेषा ॥ ३० ॥ स्मृताऽऽवश्यकसूत्रभाष्ये उद्योतनेनापि च सूरिणा स्वे(कुवलय)मालाकथाख्ये विमलप्रबन्धे । श्रीपादलिप्ताभिधसूरिवर्यं प्रशंसतेयं लिखिताऽऽदरेण ॥ ३१ ॥ कृतं तिलकमंजरीति मधुगद्यकाव्यं स्फुटं कवीन्द्रधनपालनामकमहाबुधैः। सुन्दरं तदादिकविसंस्तवे सुगुरुपादलिप्तं स्तुवन् करोत्यतिसमादरेण ननु तरंगवत्याः स्मृतिम् ” ॥३२॥ सुपाहनाहचरियग्रन्थे प्राकृतकोविदैः । नवाङ्कशशिचन्द्रेऽसौ तरंगवती स्मृता ॥ ३३ ॥ श्रीवासुपूज्यचरियग्रन्थे वाचकपुंगवैः । श्रीचन्द्रप्रभसूरीन्द्रैः सा तरंगवती स्मृता ॥ ३४ ॥ श्रीपादलिप्तसूरीन्द्रस्वर्यानावसरे कवेः । कस्यचिद्दुःखिनो दुःखोद्गारा एवं तदाऽभवन् ॥ ३५ ॥ जिनदासगणीन्द्रैस्तु पद्येऽष्टोत्तरके शते । दशवैयालीयणिज्जुत्तिग्रन्थेऽपि तथा वचः ॥ ३६ ॥ श्रीनेमिचन्द्राख्यगणी समेषां सुखावबोधाय ततः प्रसद्य । संक्षेपतस्तां नवबोधपूर्णां व्यरीरचत्प्राकृतभाषयेत्र ॥ ३७ ॥ भद्रेश्वराख्यैरथ सूरिवर्यैः संक्षिप्यतां सार्धचतुःशताङ्क–श्लोकप्रमाणामतिसारभूतां लोकोपकाराय सुखं ससर्ज ॥ ३८ ॥ विबुधतिलकनामाऽऽद्यैः कवित्वप्रकाण्डैः पुनरतिसरलेयं ग्रन्थिता गद्यवाग्भिः । न नयनविषया साऽन्तर्हितैवेति मन्ये कतिचन ननु लेभे ग्रन्थकृत् पत्रकाणि ॥ ३९ ॥ इदमपि किल तेषां श्रीमुखाज्ज्ञातमासीत् । अभिरुचिरधिकैवं संस्कृते साम्प्रतानाम् । वितरति मुनिवृन्दं संस्कृतेनोपदेशात् अमरगिर इदानीं भूरिभूरिप्रचारः ॥ ४० ॥ वीक्ष्येति बोधमणिरक्षणबद्धकक्षः स्वाध्यायबोधरविजात विशुद्धिमार्जाम् । श्रीबुद्धिसागरमहामतिसूरिराजां,

शिष्यः समग्रनिगमाऽऽगमपारदृश्वा ॥४१॥ नानाप्रबन्धरचकः कविचक्ररत्नं वक्ता प्रसिद्धउदयन्सुमहाप्रभावः । श्रीमान्महानजितसागरसूरिवर्यः जग्रन्थ तां सुरगिरा नवपद्यरूपाम् ॥४२॥ मनो जनानां रमणीयताया उपासकं सा रमणीयता च । प्रतिक्षणं नूतनतां दधाति प्रमोदते तेन सतां च चेतः ॥ ४३ ॥ अस्याः कथायाः खलु वाचनेन क्षणे क्षणे नूतनभावलाभः । बाल्यं तथा शिक्षणलेखने च विनीतिधर्माचरणे विवेकः ॥ ४४ ॥ विवाहशिष्टाचरणेऽनुरागो व्यापारदेशाटनलोकबोधः । कलाग्रविद्यासदसद्विबोधो भवस्य किम्वा परिवर्तनं च ॥ ४५॥ स्वमुक्त्युपायस्य गवेषणं चेत्यादि प्रकाराऽवगतिश्च सम्यक् । उद्भावयत्येव नवीनभावानेषा कथालोलतरंगतुल्यान् ॥ ४६ ॥ परस्परातिस्थिररागरक्तावुभौ विशुद्धव्यवहारभावौ । तरंगवत्येव च पद्मदेवोऽस्याः सत्कथाया वरनायकौ स्तः ॥ ४७ ॥ दीक्षानिमित्तोत्थभवान्तरीयस्वजातिदाम्पत्यवियोगदीनम् । पुनर्भवेऽन्योऽन्यसमागमेन चेतश्चमत्कारकचित्रभूतम् ॥ ४८ ॥ सुश्राविकाया अतिभक्तिमत्या अत्याग्रहाभ्यर्थनयाऽनुनीता । कथंचिदाश्वस्य व्रतस्थिताऽत्र तरंगवत्यारभते स्ववृत्तम् ॥ ४९ ॥ आरभ्य कौमारत एव सर्वं श्रीपद्मदेवेन समं स्वपत्या । धर्मोपदेष्टुः श्रमणस्य पार्श्वे दीक्षान्तमेतच्चरितं प्रशस्तम् ॥ ५० ॥ एतद्विधं वर्णितमस्ति येन प्रकाशते दुःखतया भवोऽयम् । श्रुत्वा च भव्या अचिरेण मोहात्संसारमूलाद्विरता भवेयुः ॥ ५१ ॥ तथैव दीक्षागुरुराजवृत्तं प्रवर्णितं यद्धृदि वाचकानाम् । परंपरं विस्मयमादधाति प्रान्तेदिशत्येव महाविरक्तिम् ॥ ५२ ॥ क्वचित्क्वचिद्धर्षकरा प्रसंगाः संदर्भिता रोचकतरप्रकारैः । रसातुराणां रसराजदानैः प्रीतिप्रदा दैन्यहराश्च सन्ति ॥ ५३ ॥ तथाक्वचिद्वर्णितमस्ति वस्तुस्वारस्यतो यत्पठनैककाले । सर्वं तदानीं तनवस्तुवृत्तं प्रत्यक्षतुल्यं हृदि भासते च ॥५४॥ क्वचितकृतं यत्सुख-

दुःखवर्णनं तज्ज्ञानतः चेतसि हर्षशोकौ । हास्यं च शृङ्गार भयानकौ च स्वरूपतः सन्ति हि तत्र तत्र ॥ ५५ ॥ रसौ तु शान्तः करुणस्तथाऽत्र प्रधानरूपेण निवेशितौ स्तः । दानं च शीलं च तपश्च भावो जिनेशपूजा कथिताः क्वचिच्च ॥ ५६ ॥ सम्यक्त्व सामायिकधर्ममूलचारित्रतत्त्वच्छकुनादिकं च । तथा ज्वरस्वप्नपुनर्भविनां भेदा विचारा उपदर्शिताश्च ॥ ५७ ॥ अद्यापि चैतद्रस-कृतकथाया अभावतः संस्कृतवाङ्मयेषु । ग्लानात्मनां भव्यदृशां जनानां श्रीसूरिणाऽकारि महोपकारम् ॥ ५८ ॥ प्राक्प्राकृते संग्रथिताकथेयं पश्चाद्बुधैर्जर्मणदेशजातै-रनूदिता जर्मणभाषया च तथैव सा गुर्जरभाषयाऽपि ॥ ५९ ॥ अशिक्षिताः सम्प्रति शिक्षिता वा कथामिमां वीक्ष्य समे मनुष्याः । प्रपठ्य संश्रुत्य सुहृष्टचित्ता भृशं भविष्यन्ति च धर्मलग्नाः ॥ ६० ॥ पुरःपुरे ज्ञान-तरङ्गिणीयं प्रवाहयन्ती निजबोधधाराम् । संप्लावयन्ती समभव्यजीवानुद्धारिका स्थास्यति स प्रमोदः ॥ ६१ ॥ ग्रहांकखेटेन्दुमिते च वर्षे श्रीवैक्रमे(१९९९) प्रान्तिजपत्तने च । संघाग्रहाद्भव्यदृशां पुरस्तादियं कथारम्भि च वाचनाय ॥६२॥ चित्राऽवलोकेन च पद्मदेवप्राप्तिः पुनस्तेन समं च संगः । तरंगवत्या इति वाचितायामस्यां समाऽभूत्परमप्रसन्ना ॥ ६३ ॥ भावोरसो धर्ममयोऽत्र तस्मान्मुद्राप्य चास्याः क्रियतां प्रकाशः । साध्वीजनानां भविनां तथैवं तत्राऽभवन्मे परमानुरोधः ॥ ६४ ॥ अस्त्यत्रपूर्वाऽपरपद्य-योस्तु, सम्बन्ध इष्टः सुधिया विभाव्यः । कार्या न युग्मादिककल्पना वा, स्वतंत्रकाव्यं विदितं न यस्मात् ॥ ६५ ॥ भावाऽभि-लक्ष्येण च वाचका स्ते कथामिमां बोधधिया पठंन्तु, अलंकृतिव्याकृतिशुद्धदृष्ट्या, विशुद्धता प्रायइहाऽऽदृताऽस्ति॥६६॥ यदा मया दायितुमुद्रणालये संग्रामकालो विषमो ह्युपस्थितः । भूरिप्रयासेऽपि तदातिदुर्लभं महार्घतायाः किल कागजादिकम् ॥६७॥ संशोध्य

जातेऽपि तथा विलम्बे तन्मुद्रणेऽकारि महान्प्रयासः । इमां पुनः संस्कृतवाचकानामग्रे निधायाऽस्मि कृतार्थ एव ॥ ६८ ॥ अनूदितागुर्जरभाषया या प्राकृते वास्ति तरंगलोला । द्वाभ्यां च संशोधनकार्यकाले कृतोपयोगोऽस्मि हि तत्र तत्र ॥ ६९ ॥ तस्माद्धि तत्कर्तृप्रकाशकानां बिभर्मि शीर्षेण बहूपकारम् । गुणैकपक्षाः सदसद्विवेके तान्सरद्बुधान्संप्रति सूचयामि ॥ ७० ॥ आचार्यतामधिगतं किल शब्दशास्त्रे, श्रीभाइशङ्करबुध मणिशंकरं च । एतावुभौ शुचिसहायकराविदानीं सद्बुद्धिगेन मनसा परिचिन्तयामि ॥ ७१ ॥ जैने किम्वा जैनशास्त्राऽतिरिक्ते, न्याये काव्ये व्याकृतौ यः प्रवीणः । तत्तद्वृत्ते सिद्धहस्तं प्रशस्तं वर्षानन्दं शास्त्रिणं तं स्मरामि ॥ ७२ ॥ वीतावधानादि मनुष्यदोषैर्याः काश्चनात्र त्रुटयो भवेयुः । गुणैकगृह्याविविबुधा विशोध्य सम्यक् पठन्तः किल सूचयन्तु ॥ ७३ ॥ आवृत्तिकाले च यतो द्वितीये शक्यं हि तत्तत्परिवर्तनं स्यात् एतावदुक्त्वा विरमे परार्थे बुधाः सदा कारुणिका भवन्ति ॥ ७४ ॥ ऋतवन्तरिक्षखकरैर्मित वैक्रमेऽब्दे+ श्री कार्त्तिकेसितदलैर्खलु पौर्णमास्याम् । हेमेन्द्रसागरसुवाचकपुंगवेन, प्रस्तावनेति विहिता सुधियः क्षमन्ताम् ॥ ७५ ॥ बुद्धिमन्तः पठिष्यन्ति संशोध्येति सुतोषतः । स्खलनायै सतो विद्वान् प्रार्थये च क्षमामपि ॥ ७६ ॥

+ " सप्ताऽन्तरिक्षखकरे मितवैक्रमाऽब्दे ( २००७ ) श्रीकार्त्तिके सितदलैर्खलु पौर्णमास्याम् ॥ ७९ ॥ "



## ॥ तरङ्गवतीकथाया महात्म्यम् ॥

इयं तरङ्गवत्याख्या ज्ञेया मिश्राऽभिधा कथा । यस्यां व्यावर्णितः सम्यग्धर्मो मुख्यतयैव हि ॥ १ ॥ यतः—धर्मार्थकामा वर्ण्यन्ते यत्र मिश्रकथाऽस्ति सा । धर्मपूर्णा पुनः सैव भृशं लोकोपकारिणी ॥ २ ॥ धर्माचार्या महात्मानो धर्मं प्रापयितुं नरान् । धर्मप्रधानां संकीर्णां कथां कुर्वन्ति शर्मदाम् ॥ ३ ॥ कथां तरङ्गवत्या ये शृणुयुर्भक्तिभावतः । तेषां भव्यात्मनामात्मा जायेत निर्मलः खलु ॥ ४ ॥ श्रोतॄणां श्रोत्रचित्तानि सदैवाऽऽनन्दयेदियम् शुद्धभावेन तां चित्ते स्मरन् मोक्षपदं व्रजेत् ॥ ५ ॥ संसारभ्रमणश्चास्याः स्मरणेनैव नश्यति । सज्जनानाञ्च मूर्धन्यो जायते भुवने जनः ॥ ६ ॥ श्रद्धायाः सुविशुद्धायाः स्थिरत्वमुपजायते । जिनेन्द्रगदिते मार्गे मोहवृत्तिविनाशके ॥ ७ ॥ यायिनां भविता शुद्धा कथा साहाय्यकारिणी । धन्या मुख्यतमो लोके ज्ञेयः श्रेष्ठसुखाऽऽप्तये ॥ ८ ॥ युग्मम् । ज्ञानभानुप्रभापुञ्जैर्जनतायास्तमस्ततिम् । दूरीकुर्वन्ती भद्रेयं दीपिकेति विराजते ॥ ९ ॥ तर्पयन्ती सतः सेयं जिनभक्तिप्रवर्द्धिनी । मन्दाकिनीव मालिन्यं संसृतेर्नाशयत्यलम् ॥ १० ॥ सत्कथां भावतः श्रुत्वा भावयेच्चेन्निजे हृदि । भूत्वाऽऽनन्दमयः सैष जन्मसार्थक्यमाप्नुयात् ॥ ११ ॥ शुद्धधर्मप्रदात् काव्यात् चित्तहारिकथानकात् । सर्वेषां मानसं तुष्टं जायते चिन्तनक्रमात् ॥ १२ ॥ कामं क्रोधं विषादं च मोहं मानं प्रमत्तताम् । भयं शोकं निराकृत्य दद्याद्बुद्धिमियं शुभाम् ॥ १३ ॥ आत्मोन्नतिकरी नूनं स्मृतेयं भव्यमानवैः । यामनुसृत्य लोके हि सिद्धिः सम्पद्यतेऽखिला ॥ १४ ॥ वैराग्यं

संयमः शीलं शुभध्यानमनल्पधीः । कथया मूर्त्तिमत्या वै भवेत्साधुतया सह ॥ १५ ॥ आत्मनस्तोषदं गीतं चित्तवृत्तिविशोधकम् । चरितममृतस्यन्दि महानन्दविधायकम् ॥ १६ ॥ पादलिप्तस्य सूरीन्द्रोश्चरित्रं चारुतायुतम् । भव्यदैन्यक्षये हेतुं सिद्धिवृद्धिविधायकम् ॥ १७ ॥ साध्व्यास्तरङ्गवत्या हि कथानुसारतः कृता । सुगीर्वाणगिरेयं वै महोपकृतिहेतवे ॥ १८ ॥ युग्मम् ॥ शृणोति श्रावयत्येनां कथां यो बोधदायिनीम् । स श्रेयो भव्यजीवात्मा प्राप्नोति शाश्वतं जने ॥ १९ ॥ धर्माधिष्ठितनीतिलोकपटुतारूपाऽमृताऽपायकं, सम्यग्बोधनपूर्वकाऽऽचरणतः श्रद्धागुणाधायकम् । त्यक्त्वा मानवदेहमुत्तमदशामासादयन्ते सुखं, किं किं नो कुरुते कथानकमिदं भावैस्तदभ्यस्यताम् ॥ २० ॥ श्रेयो यतो भवति सद्य इति प्रमाय, प्राज्ञो न हीच्छति सुधां सुकथां विहाय । नानाप्रकारशुभशिक्षणदानतोऽसौ पीयूषतोऽप्यधिगुणा महती कथाऽस्ति ॥ २१ ॥ वृद्धस्तिलकाचार्यको ननु लिलेख गद्यात्मकं, कथानकमिदं बभूव न च भोगयोग्यं हि नः । स्मृतिप्रदमवेक्षितं त्रुटकपत्रमात्रं तु तत् । भवेद्यदि सुरक्षितं सुखकरं ध्रुवं तद्भवेत् ॥ २२ ॥ वैदेशिकैः प्रगटितं निजभाषया तद् ज्ञात्वाऽभवन्मनसि कश्चिदपूर्वभावः । उत्पद्य काव्यमिति संस्कृतभाषया तत्—सारल्यतः प्रियजनेऽभवदिष्टगात्रम् ॥ २३ ॥ श्रीपत्तने तदणहिल्लपुराऽभिधाने सूपाश्रये महति सागरगच्छसत्के । भूताभ्रयुग्मकरे ( २००५ ) किल वैक्रमेऽब्दे, । मासां चतुष्टयमथो वसता सुखेन ॥ २४ ॥ हेमेन्द्रसागरसुवाचकपुंगवेन संशोधितं स्मृतिकृते शुभभक्तिभाजा । भूयात्सुमंगलमिदं सुकथानकं तत् नानाप्रकारशुभभावविबोधनाय ॥ २५ ॥

ॐ ह्रीँ श्रीँ अर्हम्

योगनिष्ठ-शास्त्रविशारद-जैनाचार्य-श्रीमद्-बुद्धिसागरसूरिभ्यो नमः ।

॥ श्रीमदजितसागरसूरिविरचिता—

# ॥ तरङ्गवतीकथा ॥

श्रीमोक्षलक्ष्मीः सुकृतैव येन, सम्यक्समासादितकेवलेन । सुराऽसुरैः सेवितपादपद्मं, नमामि तं वीरजिनेश्वरं मुदा ॥ १ ॥

साम्राज्यलक्ष्मीमपहाय येन, वैराग्यतो मोक्षरमावृताऽरम् । सुराधिपैरर्चितपादपङ्कजं, स्तवीमि तं पूज्यतमार्हतां गणम् ॥ २ ॥

सम्प्राप्तहृद्याचलमोक्षशर्मणः पारं प्रयातान् भववारिराशेः । जन्मादिदुःखौघतरङ्गितस्य, नमामि सिद्धानखिलान्मुदाऽनिशम् ॥३॥

सद्गुणैः शुद्धशीलेन, विज्ञानविनयेन च । सङ्घकीर्त्तिकरान्सर्वा-नाचार्यान् प्रणमाम्यहम् ॥ ४ ॥

सद्गुरुं ज्ञानदातारं, सर्वसिद्धिप्रदायकम् । वन्देऽहं सततं सेव्यं, सर्वमङ्गलकारकम् ॥ ५ ॥

यत्प्रभावान्मृता लोके, जीवन्त्यपि कवीश्वराः । वाग्देवी सा प्रसन्नाऽस्तु शब्दार्थसिद्धिदायिनी ॥ ६ ॥

काव्यहेम्नः परीक्षार्थं, निकषोपलसन्निभाः । गुणदोषविदः सन्तु, विद्वांसः सुखिनः सदा ॥ ७ ॥

सूरीन्द्रपादलिप्तेन, रचिता विस्तृता कथा । तरङ्गवत्यभिख्येयं, भव्यप्राकृतभाषया ॥ ८ ॥

सन्ति यस्यां दण्डकानि, विशालानि बहूनि च । सम्बन्धा विविधार्थाश्च, समासा दुर्घटास्तथा ॥ ९ ॥
श्लेषाऽलङ्कारसंमिश्र–वाक्यानि बहुधाऽभवन् । गद्यपद्यात्मका भावा–दुर्बोधा मिश्रभाषया ॥ १० ॥
यद्यपि विदुषां बोधो–जायते कठिनात्मनाम् । ग्रन्थकारगिरां सुष्ठु, दुर्ग्राह्या मन्दचेतसाम् ॥ ११ ॥
तस्मादयं प्रयासो मे, जिज्ञासुजनताऽऽग्रहात् । आकाङ्क्षा पूरयितव्या, जिज्ञासूनां सुसाधुभिः ॥ १२ ॥
संस्कृता सुघटाशैली, स्फुटार्था भव्यभाषया । रचितेयं सुखायैव, क्लिष्टशब्दविवर्जिता ॥ १३ ॥
सुभाषितं सर्वत एव शस्यते, कवीन्द्रवारैर्मुदितस्वभावैः । क्लिष्टार्थमात्रं रचितं सुकाव्यं, केचिद्धि जानन्ति विशेषविज्ञाः ॥१४॥
विशेषावश्यके भाष्ये, निर्दिष्टं स्वेन निर्मिते । श्रीजिनभद्रगणिना, तरङ्गवतीनामकम् ॥ १५ ॥
श्रीहरिभद्रसूर्याद्या–ग्रन्थारम्भे तदीयकम् । स्मरणं चक्रिरे लोके, तुष्टिपुष्टिविधायकम् ॥ १६ ॥
क्लिष्टेयं प्रकृतानाञ्च, विदुषां मोददायिनी । विस्तृतत्वाज्जनानां वै, सर्वेषां न हितावहा ॥ १७ ॥
ज्ञात्वेति नेमिचन्द्रेण, सूरिणा सरला नवा । रचिता प्राकृता लोके, संक्षेपाद्रुचिदायिनी ॥ १८ ॥
धीमद्भ्यो रोचते नेयं, क्लिष्टा च मन्दचेतसाम् । तस्माद्गीर्वाणवाचेयं, रच्यते हितकारिणी ॥ १९ ॥

## पादलिप्ताचार्यजन्मभूमिवर्णनम् ।

स्वर्गपुरी समानाऽस्ति, विशाला कोशलापुरी । चतुर्वर्णजना यस्यां, वसन्ति धर्मतत्पराः ॥ २० ॥
जैनधर्मरताः सर्वे, देवपूजापरायणाः । गुरूणामद्भुतां भक्तिं, कुर्वन्ति स्म प्रियान्विताः ॥ २१ ॥

तत्रत्य जनपूजाभिः, सन्तुष्टाः सर्वदेवताः । सर्वदा सम्पदां वृष्टिं, कुर्वन्ति शुभदायिनीम् ॥ २२ ॥
तत्पुण्यभूमिजातेन, पादलिप्तेन सूरिणा* । रचितां सुन्दरां वार्तां, शृणुध्वं सावधानतः ॥ २३ ॥
अस्यां श्रुतायां लोकेऽस्मिन्, शुद्धभावेन मानवाः । जन्ममृत्युजरादुःखै-र्मुच्यन्ते नाऽत्र संशयः ॥ २४ ॥

## कथाप्रारम्भः

समृद्धिशालिभिर्लोकैः, सम्भृतैर्विविधैः पुरैः । ग्रामैरनेकैः संजुष्टो-देशोऽस्ति मगधाभिधः ॥ २५ ॥
विजितदेववृक्षाऽऽलि- द्रुमैः पुष्पविराजितैः । गृहोद्यानैः सदारम्यै,-र्विहगारावसंकुलैः ॥ २६ ॥
यो देवलोकसम्पत्तिं, विभाति तर्जयन्निव । अभ्रंलिहा जिनेन्द्राणां, प्रासादाः सन्ति यत्र वै ॥ २७ ॥
स्थाने स्थाने स्तुपाः प्रौढा-राजन्ते यत्र शोभिताः । नीतिमन्तः सदाचारा-जनाश्च जनवल्लभाः ॥ २८ ॥
कृत्याऽकृत्यविवेकज्ञा-जिनभक्तिपरायणाः । निरीतयो महेभ्याश्च, मोदन्ते यत्र भूरिशः ॥ २९ ॥
तत्राऽस्ति रम्यं प्रवरं पृथिव्यां, मनोहराऽऽरामरमामनोज्ञम् । दीव्यश्रिया तर्जितदेवधाम, महर्द्धिकं राजगृहं पुरं वरम् ॥ ३० ॥

---

*निर्वाणकलिकामुख्या-ग्रन्था येन प्ररूपिताः । बहवः शोधिताश्चैव, जैनतत्त्वाऽनुसारिणः ॥ १ ॥
आकाशगामिनीविद्या, तस्य साध्या बभूव च । विक्रमादित्यभूपं य-स्तीर्थे सिद्धाचलाभिधे ॥ २ ॥
प्रबोध्य सङ्घसहितां, यात्रां कर्त्तुमुपादिशत् । तस्य सिद्धगिरेस्तल-हट्टिकायामवासयत् ॥ ३ ॥
पादलिप्तपुरं सूरेः, पवित्रनामकीर्त्तये । पालीताणेति नाम्नेदं, साम्प्रतं श्रूयते जने ॥ ४ ॥

यस्मिन् पुरवरे रम्ये, सुव्रतस्वामिनो मुनेः। कल्याणकत्रयं जज्ञे, लोककल्याणकारकम् ॥ ३१ ॥
महावीरजिनेन्द्रश्च, सशिष्यः समवासरत्। सद्धर्मदेशनां यत्र, ददौ लोकहितावहाम् ॥ ३२ ॥
निजौजसा निर्जितवैरिवार-स्तस्मिन्नभूत्कोणिकभूमिपालः। प्रभूतसेनाधिक सम्पदाढ्यः,कुलप्रदीपो जितसर्वदोषः ॥ ३३ ॥
श्रीवीतरागस्य विशुद्धशासने, रक्तोऽभवद्यो विमलप्रभावः। प्रशान्तमूर्त्तेर्जगदेकपूज्य-पादारविन्दस्य विशुद्धमानसः ॥ ३४ ॥
तस्मिन्नभूच्छ्रेष्ठिवरप्रधानो, जनेषु मान्यो जिनधर्मरागी। दयार्द्रचेतो धनपालनामा, नराधिपस्याऽतिशयेन वल्लभः॥ ३५ ॥
तस्य श्रेष्ठिवरस्यासी-दनुरूपा पतिव्रता। भार्या सोमाभिधा भव्या, शीलालङ्कारभूषिता ॥ ३६ ॥
श्रेष्ठिनस्तस्य हर्म्यस्य, सन्निधौ धर्मसाधनम्। उपाश्रयः समस्ति स्म, ज्ञानघोषेण घोषितः ॥ ३७ ॥
सुव्रताऽऽख्या तपोमूर्त्तिः, साध्वी साधुव्रतोद्यता। तत्राऽऽसरत्स्वशिष्याभि-र्बहुभिः परिवारिता ॥ ३८ ॥
आरभ्य जन्मतो भद्रा, याऽभवद् ब्रह्मचारिणी। अनेकधा तपः श्रेण्या, कृशाङ्गी तत्त्ववेदिनी ॥ ३९ ॥
आत्मध्यानपरा नित्यं, विज्ञातैकादशाङ्गिका। भव्यानामुपकाराय, मोक्षमार्गैकदीपिका ॥ ४० ॥
साध्व्यास्तस्या अनेकाश्च, शिष्या आसन्विनीतकाः। तासामेकाऽभवत्साध्वी, कृतषष्ठतपाःसुधीः ॥ ४१ ॥
चिकीर्षुः पारणां सा तु, नवदीक्षितयाऽन्यया। भिक्षार्थे निःससाराऽमा, निजोपाश्रयतो बहिः ॥ ४२ ॥
सर्वजीवदयादक्षा, निम्नदृष्टिः सुमन्दगा। गत्वा तस्थौ प्रशस्ते सा, भिक्षायोग्यगृहाङ्गणे ॥ ४३ ॥
अतिथ्यागमनं तत्रा-ऽवेक्षमाणास्तदीपकम्। कियद्दास्यः स्थिता दृष्ट्वा, सौन्दर्य चकिता भृशम् ॥ ४४ ॥

साक्षाल्लक्ष्मीरियं साध्वी, वार्तां चक्रुः परस्परम् । सुन्दराऽऽकुञ्चिता भान्ति, अहो ! अस्याः शिरोरुहाः ॥ ४५ ॥
मुखं चन्द्रसमाकारं, जनमोहविधायकम् । अलङ्कारविहीनाऽपि, रम्यत्वं जनयत्यसौ ॥ ४६ ॥
स्निग्धवस्त्रसमाच्छन्नौ, कर्णावस्या विराजतः । भ्रुकुटिः कुटिलाकारा, धनुर्यष्टिरिवापरा ॥ ४७ ॥
जलान्निर्यद्यथा पद्मं, भिक्षयन्त्याश्च कोमलः । हस्तोऽस्याः शोभते वस्त्रान्निष्क्रामन् भासुराऽऽकृतिः ॥ ४८ ॥
तस्याः शब्दं निशम्याथ, श्रेष्ठिनी गृहतो बहिः । आजगाम विभूषाभिर्भूषिता मन्दभाषिणी ॥ ४९ ॥
शस्तभावाऽतिरूचिरा,–श्वेतवस्त्रधरा वरा । करुणाक्रान्तचेतस्का, जैनधर्मानुरागिणी ॥ ५० ॥
निजाङ्गणं पुनानां तां, साध्वीं च तत्सहागताम् । निरीक्ष्य भावतः साऽपि,प्रणनाम रमासमाम् ॥ ५१ ॥
ततः पद्मसमासीन–भ्रमराभकनीनिके । मुखञ्च चन्द्रवत्तस्या–एकदृष्ट्या व्यलोकयत् ॥ ५२ ॥
स्वरूपेणाऽब्धितनुजां, तर्जयन्तीं तपस्विनीम् । विलोक्य तर्कयामास, श्रेष्ठिनी सविकल्पकम् ॥ ५३ ॥
नेयं स्वप्नगता मेऽभूत्, सुन्दराकृतिरङ्गना । क्वापि नेदृक् स्वरूपं वा, वर्णने वाचितं मया ॥ ५४ ॥
अद्भुतमीदृशं लोके, स्त्रीरत्नं किं भविष्यति ?। रम्यस्त्रीनिर्मितद्रव्यो–त्तमेनेदं विनिर्मितम् ॥ ५५ ॥
मुण्डितापि यदेदानीं, साध्वीवेषविभूषिता । ईदृशीयं मनोहारि स्वरूपा दृश्यते तदा ॥ ५६ ॥
गृहाश्रमस्थिता यास्तु, विशिष्टरूपसम्पदः । अस्याः सौभाग्यसम्पत्तिरभविष्यत्प्रमेतरा ॥ ५७ ॥
अङ्गान्यस्या व्यलङ्कारा–ण्यक्ष्यन्ते धूलिमाञ्जि च । तथाऽपि मम दृष्टिस्तु, तृप्तिं सम्पद्यते न वै ॥ ५८ ॥

प्रत्यङ्गं वीक्ष्य तत्रैव, निर्निमेषं विलोचनम् । पुनः पुनः परिभ्राम्य–त्रैव विश्राम्यति क्षणम् ॥ ५९ ॥
देवाङ्गनाः शुभं रूप–मस्याश्चित्तविनोदकम् । वाञ्छन्ति देवकन्येयं, किं वा नागकुमारिका ? ॥ ६० ॥
संभाव्यते परं नैतत्सततं निर्निमेषिकाः । श्रूयन्ते देववनिताः, सदार्द्रपुष्पमालिकाः ॥ ६१ ॥
रजोऽपि न स्पृशत्यङ्गं, तासामार्यात्वियं ध्रुवम् । धूलिपादाचलच्चक्षु–स्तस्मान्नैव सुराङ्गना ॥ ६२ ॥
मानुषी वर्त्तते काचित्, पृष्टव्यास्तः शनैरसौ । गजे दृष्टे वृथा तस्य, पादपद्धतिशोधनम् ॥ ६३ ॥
सा श्रेष्ठिनी विचिन्त्यैवं, भिक्षां दत्वा यथाविधि । पप्रच्छ तां महाश्चर्यपूर्वकं–प्रीतिमत्तरा ॥ ६४ ॥
पूज्यार्थे ! न विबाधा चेत्, क्षणं विश्राम्यतामिह । कथयस्व कृपां कृत्वा, किञ्चिद्धर्मकथानकम् ॥ ६५ ॥
साध्वी ततोऽब्रवीत्सर्वहितकृद्धर्मबोधने । नास्ति क्षतिर्हि केषाञ्चित् काऽपि कुत्रचिदुत्तमे ! ॥ ६६ ॥
अहिंसालक्षणो धर्मः, पुनाति श्रुतिमागतः । वक्तारमपि लोकेऽस्मिन्, सर्वत्र सुखदायकः ॥ ६७ ॥
यदि कश्चित्क्षणमपि, निर्हिंसं श्रृणुयाद् वृषम् । ततो दयामयं धर्मं, सम्यक्पालयति स्वतः ॥ ६८ ॥
उपदेशस्तदैव स्या–दुपदेष्टुः फलेग्रहिः । यतोऽन्यं तारयत्येष–स्वयमप्यक्षयो भवेत् ॥ ६९ ॥
धर्मोपदेशनं तस्मा–च्छ्रेष्ठं सद्भिर्मतं सदा । अतोऽहं वेद्मि यत्किञ्चिद्, ब्रवीमि श्रुणु तच्छुभे ! ॥ ७० ॥
निशम्य तद्वचो दास्यो–मुदितास्तालपूर्वकम् । वदन्त्यस्याः सुरम्यत्वं, दृग्गोचरीभविष्यति ॥ ७१ ॥
साऽथ साध्वी तया दत्ते, श्रेष्ठिन्या साध्वीसंयुता । विष्टरेऽतिष्ठदेकान्ते, सम्यक्धर्मपरायणा ॥ ७२ ॥

दासिभिः श्रेष्ठिनी सार्द्धं, प्रणम्य विनयान्विता । एतस्याः सन्निधौ धर्म–कथां श्रोतुमुपाविशत् ॥ ७३ ॥
ततः साध्वी स्फुटैर्वाक्यैः, श्रोतृचित्तहरस्वरैः । धर्मं प्रोवाच सार्वज्ञं, सर्वजीवहितावहम् ॥ ७४ ॥
जन्ममृत्युजराव्याधि–प्रमुखार्तिविनाशकम् । संसारसागरोद्दाम–तरण्डसन्निभं श्रुतम् ॥ ७५ ॥
चिन्तामणीयते धर्मः, कल्पद्रुम इवाऽपरः । कामकुम्भायते धर्मः, सद्गतिक्षेमदायकः ॥ ७६ ॥
धर्मे सिद्धेऽखिला सिद्धिः, प्राप्यते पुण्यशालिभिः । धर्मेणैव जनाः प्राप्ता–मोक्षसौधमलौकिकम् ॥ ७७ ॥
किंकर्तव्यविमूढबुद्धिकलितो बम्भ्रम्यते संसृतौ, कर्तुं धर्मविधिं न दुःखदलनं भावं विधत्ते हृदि ।
संसारोदधिपारगामिपुरुषो नौकां विना स्यात्कथं । धर्माराधनसाधनेन सुलभं लोकद्वयस्थं सुखम् ॥ ७८ ॥
सम्यग् ज्ञानं तथा शुद्धं दर्शनं जिनभाषितम् । अहिंसा सत्यमस्तेयं ब्रह्मचर्याऽपरिग्रहौ ॥ ७९ ॥
महाव्रतानि पञ्चेत्थं विनयः संयमस्तपः । क्षमादि धर्मतत्त्वानि, ज्ञापितानि तथा स्फुटम् ॥ ८० ॥
अथ श्रेष्ठिन्यवोचत्तां, विनयाऽवनताऽऽनना । धर्मतत्त्वं श्रुतं त्वत्तोऽधुनाऽन्यत्कथयस्व मे ॥ ८१ ॥
त्वन्मुखाम्बुजसौन्दर्यं, निरीक्ष्य मद्विलोचने । प्रमोदमेदुरेऽभूतां, दिव्यसंपद्विजित्वरम् ॥ ८२ ॥
परं त्वज्जन्मनो वार्त्तां, श्रोतुं गाढतरोत्सुकौ । जातौ कर्णावुभौ चित्रां, पूज्यपादे ! ऽधुना मम ॥ ८३ ॥
विष्णोः कमलवत्कस्य पितुस्त्वं वल्लभाऽभवत् । जगद्वन्द्या च ते माता, किन्नामाऽऽसीच्छुभाशये ? ॥ ८४ ॥
पितुर्गृहे सुखं कीदृक्, कीदृक्च श्वशुरालये । हेतुना केन दीक्षां त्वं, प्रपन्नाऽसि वदाऽधुना ॥ ८५ ॥

एतद्विज्ञातुमिच्छामि, ब्रह्मचर्यविभूषिते ! तद्वृत्तान्तं निशम्याशु, मम तृप्तिर्भविष्यति ॥ ८६ ॥
रम्यनार्याश्च नद्याश्च, साधोः साध्व्यस्तथैव च । मूलं क्वाऽपि न प्रष्टव्य–मिति तत्त्वविदो विदुः ॥ ८७ ॥
तेषामेवं कृते लोके, तुच्छत्वं जायते क्वचित् । असन्तुष्टिश्चापमानं, तस्मात्तन्नैव चर्चयेत् ॥ ८८ ॥
वेद्म्यहं च मुधा प्रश्नैः, खेदनीया न धर्मिणः । मन्मनस्तव सौन्दर्यं, प्रश्ने प्रेरयते भृशम् ॥ ८९ ॥
साध्वी प्रोवाच ते प्रश्न–स्योत्तरो मेऽस्ति दुःशकः । निष्फलानां यतो वार्त्ता, विपयाणां न कुर्महे ॥ ९० ॥
गृहावासे यदानन्दोऽनुभूतः स्मर्यते न सः । तथापि भवदुःखेन, दुःखिता कर्मणःफलम् ॥ ९१ ॥
भुञ्जाना मामकं वृत्तं, लोकनिन्दां स्मरन्त्यहम् । किञ्चिद्वदामि ते श्रद्धा, धर्मकर्मण्यति स्फुटा ॥ ९२ ॥
इत्थं साध्वीगिरा तुष्टा, श्रेष्ठिनी निजचेटिकाः । प्रेरयामास तच्छ्रोतुं वृत्तान्तं ध्यानपूर्वकम् ॥ ९३ ॥
साध्व्यथो निजवृत्तान्तं, पूर्वजन्मसमुद्भवम् । कथयामास कारुण्या–ल्लोकोपकृतिहेतवे ॥ ९४ ॥
आश्चर्यकृत्स्वसद्भाग्य–गर्वहीना व्रतिन्यसौ । वाग्देवीव समारेभे, धर्मदृष्टिः कथानकम् ॥ ९५ ॥
वृत्तान्तं यदहं वेद्मि, यच्च मे स्मृतिगोचरम् । मदीयजीवनस्येदं, सारं संक्षेपतो ब्रुवे ॥ ९६ ॥

## साध्व्याः पूर्वभवकथाप्रारम्भः ।

मध्यदेशस्थितो वत्साऽभिधो देशोऽस्ति सुन्दरः । अमूल्यैश्च पदार्थौघैः, संभृतः सुखदायकैः ॥ ९७ ॥
यस्मिन्ननेकधर्मा म–पुञ्जा सम्पदान्विताः । निवसन्ति सदांशंसा–धर्मार्थकामपालकाः ॥ ९८ ॥

कौशाम्बी नगरी तस्मिन्, स्वर्गपुरीव सम्पदा । वत्सदेशस्थितं मुक्ता-रत्नमिव विराजते ॥ ९९ ॥
अन्यासां नगरीणां साऽऽदर्शरूपास्ति केवला । यमुनायास्तटे सैव, रत्नभूताऽस्ति भासुरा ॥ १०० ॥
उदयननराधीश-स्तां शशास पुरीं वराम् । संग्रामे मयदोऽरीणां, प्रतापोर्जितविक्रमः ॥ १०१ ॥
साधुसाध्वीमहाभक्तः, सुहृदां सुखदायकः । गजाश्वरथपत्तीनां, बलेन प्रबलो महान् ॥ १०२ ॥
प्रफुल्लवदनो नित्यं, हैहयाऽभिधवंशजः । हंसस्वनः सिंहगति,-र्विख्यातो वसुधातले ॥ १०३ ॥
रूपशीलगुणैः ख्याता, विनीता कमलानना । अभूद्वासवदत्ताख्या, महिषी तस्य वल्लभा ॥ १०४ ॥
राज्ञस्तस्य बभूवैकः, ऋषभसेननामकः । सवया नगरश्रेष्ठी, सुहृत्सर्वजनैर्मतः ॥ १०५ ॥
अर्थशास्त्रविदां मुख्यः, सर्वेषां व्यवहारिणाम् । न्यायकर्त्ता समानेषु, जनेषु मित्रभावनः ॥ १०६ ॥
सत्यप्रियो दयानिष्ठो-लोकानां हितकारकः । निर्दोषजीवनो जैन-धर्मरक्तो वणिग्वरः ॥ १०७ ॥
स्याद्वादवेदिनां मध्येऽप्यसौ सन्मानतां गतः । प्रमाणवचनं तस्य, गण्यते सर्वदा जनैः ॥ १०८ ॥
क्षमावान् शान्तचेतस्कः, साधुसङ्गरतः सदा । आदिमो धर्मकार्येषु, बहुधोत्तमतां गतः ॥ १०९ ॥

यतश्चोक्तम्-

चेतः सार्द्रतरं वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला, शक्तिः क्षान्तियुता मतिः श्रितनया श्रीर्दीनदैन्यापहा ।
रूपं शीलयुतं श्रुतं गतमदं स्वामित्वमुत्सेकता-निर्मुक्तं प्रकटान्यहो नव सुधाकुण्डान्यमून्युत्तमे ॥ ११० ॥

तत्प्रियाऽभूद्रमारम्या, कमला शीलशालिनी, दयादाक्षिण्यसंयुक्ता, सौभाग्यगुणवत्तरा ॥ १११ ॥
कियत्काले गते तस्याः, श्रेष्ठिन्याः कुक्षिसंभवाः । अभूवन्नङ्गजा अष्टौ, क्रमतः सत्त्वशालिनः ॥ ११२ ॥
यमुनाऽभ्यर्थनातोऽहं, तेषामुपरि तद्गृहे । सञ्जाता फलरूपा तत्परिवारसुखावहा ॥ ११३ ॥
जातायां मयि तातेन, मामकेन महोत्सवः । व्यधायि मोदमानेन, पौरलोकमुदावहः ॥ ११४ ॥
मत्पालनाय तातेन, दास्यः संरक्षिताः शुभाः । सूतिकाकर्मकुशला-श्चक्रुस्ताः समयोचितम् ॥ ११५ ॥
नालच्छेदादिकं कृत्वा, पित्राऽऽनन्देन भोजिताः सम्बन्धिनः समाकार्य, सर्वे सपरिवारकाः ॥ ११६ ॥
ततो जन्मादिसंस्कारा-विहिता विधिपूर्वकम् । मत्तातेन प्रमोदेन, यथाशक्त्यनुसारतः ॥ ११७ ॥
यमुनातरङ्गस्वप्न-प्रभावेणाऽभवं ततः । जाता तरङ्गवत्याख्या, मम पित्रादिसंमता ॥ ११८ ॥
शयने दुःखिताऽहं चेत्, करपादादिताडनम् । कुर्वन्तीं मां विलोक्याशु, धात्री मेऽधारयत्स्वयम् ॥ ११९ ॥
दास्यो धात्री च मां लात्वा, हस्तयोः सद्मनि स्थिताः । बहुधा रमयामासुः पालयन्त्यो दिवाऽनिशम् ॥ १२० ॥
सुवर्णमयरम्याणि, क्रीडितुं क्रीडनानि च । आनयामास मत्तातः, शालभञ्जिमुखानि वै ॥ १२१ ॥
अपैक्षिष्ट मया यद्यत्, तत्तत्सर्वं समाहृतम् । व्यलोकयत महानन्द-सेविन्या सुमनोहरम् ॥ १२२ ॥
सम्बन्धिनश्च मे सर्वे, निजोत्सङ्गे निधाय माम् । बहुभिर्लालयामासुः प्रमोदाल्लालनादिभिः । ॥ १२३ ॥
निरीक्ष्य मां परीवारः, पितुर्मे मुदितोऽभवत् । शनैः शनैः पदार्थेषु, दृष्टिक्षेपं व्यधामहम् ॥ १२४ ॥

किञ्चित्किञ्चित्स्वयं वक्तु–मशिक्षं मन्दभाषिणी । ततो धरातलं पद्भ्यां, मण्डयामास सद्मनि ॥ १२५ ॥
तातेत्यवादिषं यर्हि, तदानीं मे कुटुम्बिनाम् । प्रमोदो न ममौ चित्ते, मुहुर्मन्मनभाषया ॥ १२६ ॥
ततोऽभूच्चौलसंस्कारः, क्रमेण गमनागमम् । कुर्वन्तीतस्ततः स्वैरं, पर्याटमहमद्भुतम् ॥ १२७ ॥
सुवर्णपुत्तलीभिश्च, सखिभिः सहक्रीडितुम् । लग्नाऽहं मोदमानाऽलं, मातृप्रेमविवर्द्धिनी ॥ १२८ ॥
पांसुभिर्निर्मितैर्गेहैः, क्रीडां निर्मातुमुत्सुका । अभूवं सवयस्काभि–र्भवनाङ्गणभूषणम् ॥ १२९ ॥
द्वादशाब्दे मदीया धी–र्विपुलाऽजायत क्रमात् । मदर्थं शिक्षकाः श्रेष्ठाः मत्तातेन नियोजिताः ॥ १३० ॥
गणितवाचनोल्लेख–गीतनृत्यकलादिषु । वीणादिवादने चैव, पुष्पपादपवर्द्धने ॥ १३१ ॥
वानस्पत्येषु शास्त्रेषु, रसायनविधानके । बुद्धिप्रभावतोऽभूवं, निपुणाचार्यशिक्षणात् ॥ १३२ ॥
जैनधर्मानुरागी मे, पिताऽभूद्वत्सलो मयि । तदिच्छया मया भाव्यं, जैनतत्त्वप्रवीणया ॥ १३३ ॥
जैनधर्मप्रवीणांश्च, पण्डितान्प्रवरान्पिता । समाहूयाऽन्तिके तेषां, शिक्षणाय मुमोच माम् ॥ १३४ ॥
अणुव्रतानां पञ्चानां, गुणव्रतत्रिकस्य च । शिक्षाव्रतचतुष्कस्य, श्राद्धधर्मस्य भावतः ॥ १३५ ॥
भावनानां मया सम्य–गभ्यासो विहितो दृढः । शुद्धवंशोद्भवानां हि जायते श्रेयसी मतिः ॥ १३६ ॥
ततोऽहं यौवनाक्रान्ता, सञ्जाताऽवयवैः शुभैः । स्नेहसारमबोधश्च, यूनां मोहविधायिनी ॥ १३७ ॥
तदानीं सत्कुलीनानां, धनाढ्यानां स्वदेशतः । यूनवः प्रार्थयामासु–र्मामुद्वोढुमभीप्सवः ॥ १३८ ॥

गुणरूपकलाभिर्मे, योग्यः कोप्यमिलन्नहि । मत्तातेन ततः सर्वे, सुधिया विनिवर्त्तिताः ॥ १३९ ॥
प्रियगण्डलमध्यस्था, दिनान्यगमयं मुदा । विनोदवार्त्तया सार्द्धं, सखीभिर्विमलात्मभिः ॥ १४० ॥
सारसिका सखी मेऽभूद्-विश्वासस्थानमुत्तमम् । कलानामचलं धाम, प्राणतोऽप्यधिकप्रिया ॥ १४१ ॥
वृत्तान्तं नूतनं भव्यं, सा मां नित्यमचीकथत् । समागत्य महानन्दं, वर्द्धयन्ती शुभाशया ॥ १४२ ॥
सहचर्योऽपराः काश्चि-दागमन्मम सन्निधौ । गृहस्य सप्तमीं भूमिं, नीता ताभिः सहाऽरमे ॥ १४३ ॥
हर्म्योपरितने भागे, कदाचित्सहचारिणीः । नीत्वाऽऽनन्दरसं साकं, ताभिरस्वादमद्भुतम् ॥ १४४ ॥
रम्याण्यपश्यं दूरस्था-न्यात्मतुष्टिकराणि च । दर्शयन्ती सखीः सर्वाः, नवीनकौतुकप्रियाः ॥ १४५ ॥
फलपुष्पाणि मिष्टान्नं, क्रीडायाः साधनानि च । पितरौ भ्रातरो मह्यं, ददति स्म प्रमोदतः ॥ १४६ ॥
पितरौ विनयाचारा-द्दानतो मम भिक्षुकाः । बान्धवाः शुद्धतायाश्च, स्नेहात्सर्वे मुदं ययुः ॥ १४७ ॥
लक्ष्मीदेवी तथा मेरौ, यथा पितृगृहे सदा । भ्रातृपत्नी सखीभिश्च, प्रमोदं प्राप्नवत्यहम् ॥ १४८ ॥
पौषधस्य दिने नित्यं, सामायिकमनिन्दितम् । अकार्षं धर्मकार्याणि, विधिना च विशेषतः ॥ १४९ ॥
जैनतत्त्वानि, विज्ञातु-मगमं धर्मवाञ्छया । साध्वीनां गणमुख्यानां, सन्निधौ सेननोत्सुकाः ॥ १५० ॥
एवं पित्रादिभिः साकं, सदाऽऽनन्दपरायणैः । सुखेन वासरा जग्मु-र्मदीयाः स्नेहबन्धनात् ॥ १५१ ॥
अन्यदा मत्पिता स्नात्वा, कृतेष्टदेवपूजनः । विधाय भोजनं स्वच्छ-भव्यवस्त्रधरः स्थितः ॥ १५२ ॥

गोविन्देन समं वार्त्तां, कुर्वन्त्यब्धिसुता यथा । तथैव मामकी माता, तदानीं पर्यराजत ॥ १५३ ॥
कृतस्नानाऽप्यहं तत्र समर्चितजिनेश्वरा । मातापित्रोः पदाम्भोजं, भक्त्या नन्तुं समागमम् ॥ १५४ ॥
विनयेन मया माता-पितरौ वन्दितौ मुदा । ताभ्यामाशीर्वचो दत्तं, कल्याणं तव जायताम् ॥ १५५ ॥
उपविशाऽत्र वत्से ! त्वं, जनन्यास्तव सन्निधौ । तातेनेति समाज्ञाता, संस्थिताऽहमपि स्वयम् ॥ १५६ ॥
तत्क्षणं चन्द्रमःकान्त्या, भूषितेव शरन्निशा । कृष्णा बाह्यप्रदेशेषु, श्रमणाच्छ्यामगात्रका ॥ १५७ ॥
पुष्पवस्त्रधराऽस्माकं, मालाकाराङ्गनाऽऽगता । पुष्पगृहाद्विनिर्गत्य, धाम्नि च गन्धवासिते ॥ १५८ ॥
विशेषतः सुगन्धं च, सारयन्ती समन्ततः । विनीतवचनाऽऽलापा, हस्तपुष्पकरण्डिका ॥ १५९ ॥
सदाचाररता सा मे, पितुर्नत्वा क्रमाम्बुजे । विनीतेवाऽवदच्छिष्या, मुञ्चन्ती मधुरस्वरम् ॥ १६० ॥
हिमालयस्योत्तरस्मिन्प्रदेशे मानसं सरः । प्रमोदस्याऽद्वयस्थानं, ग्रीष्मकालनिवासभूः ॥ १६१ ॥
इदानीं तत्परित्यज्य, हंसश्रेणी समागता । अत्रत्यायां वासभूमौ, स्वच्छया मोदते तराम् ॥ १६२ ॥
कुर्वन्ति मधुरालापं, सुस्वरं ते सितच्छदाः । शरत्समा गतेत्येवं, सूचयन्ति प्रमोदतः ॥ १६३ ॥
सितच्छद इवेयं द्राग्, यमुनातटपादपैः । विरलैरागमं स्वीयं, निवेदयति मानवान् ॥ १६४ ॥
नीलाम्बराणि कुरुते, वनानि सुरभीण्यसौ । पीतवस्त्राण्यसनक-वनानि स्वप्रभावतः ॥ १६५ ॥
श्वेतवस्त्राणि विषम-च्छदारण्यानि साम्प्रतम् । श्रेष्ठिस्त्वयि प्रसन्नाऽस्तु,सद्भाग्यं ते तनोतु सा ॥ १६६ ॥

इत्युदीर्य तथा पुष्प-स्थालः समच्छदैर्भृतः । अनावृतः प्रमोदेन, मत्तातस्य करेऽर्पितः ॥ १६७ ॥
प्रासीसरच्चतुर्दिक्षु तस्मादाल्हादवर्द्धनः । हस्तिमदसमो गन्ध-स्तेषामासीन्महोत्कटः ॥ १६८ ॥
मत्पिता तं सुमस्थालं, प्रभुपूजनकामुकः । मूर्ध्ना स्पृष्ट्वा कियत्पुष्पा-ण्यादाय मुक्तवान् पृथक् ॥ १६९ ॥
ततः कियन्ति मह्यञ्च, भ्रातृभ्यः कतिचित्तथा । दत्तानि भ्रातृपत्नीभ्यो मम मात्रे कियन्त्यपि ॥ १७० ॥
सर्वाण्येतानि शुक्लानि, गजदन्तनिभानि च । तथाऽपि मत्पितुर्दृष्टि-रेकस्मिन्कुसुमेऽपतत् ॥ १७१ ॥
तत्पुष्पं विकसद्रूव्यं, सुवासं विपुलं पिता । पीतवर्णं क्षणं किञ्चि-देकदृष्ट्या व्यलोकयत् ॥ १७२ ॥
तद्विचारान्निवृत्तः स दत्त्वा मह्यं च तत्सुमम् । हसित्वा मां समुद्दिश्य, जगौ मधुरया गिरा ॥ १७३ ॥
प्रेक्षस्व वर्णमस्य त्वं, सुगन्धस्य परीक्षणे । कुसुमोत्पादने चैव, दृश्यसे निपुणा सुते ! ॥ १७४ ॥
तस्माच्चमेतद् वृत्तान्तं, स्फुटं जानासि कोविदे ! । सितेष्वेषु कुतः पुष्प-मेकं पीतं समेष्वभूत् ॥ १७५ ॥
कलादक्षेण केनापि, विस्मापनसमीहया । पुष्पोत्पत्ति कलादाक्ष्यं, वै तद्दर्शयितुं कृतम् ॥ १७६ ॥
दाहकैरितरद्रव्यैः, संयुक्तैः फलपुष्पयोः । यथेष्टवर्णस्योत्पत्ति-श्चित्रकर्मा विधीयते ॥ १७७ ॥
यतस्तादृक्पदार्थेषु, प्रफुल्लीकृत्य पादपान् । न्यूनाऽधिकविधानाय, शक्तिरस्त्यद्भुता किल ॥ १७८ ॥
वर्षासु दृश्यतेऽस्माभि-र्भिन्नवर्णाकृतीनि यत् । फलपुष्पाणि लोकेऽस्मिन्, परीक्ष्यन्ते धरारुहैः ॥ १७९ ॥
निशम्य तत्पितुर्वाक्यं, विलोक्य तत्सुमं पुरा । अवोचं निर्णयं कृत्वा, विनीता पितरं वचः ॥ १८० ॥

भूमिं वपनकालश्च, बीजं बीजाङ्कुरांस्तथा । वृष्टिमुत्करमाश्रित्य, भवन्ति वृक्षजातयः ॥ १८१ ॥

इत्थं विचारणां कृत्वा, कलादक्षः सुमेऽखिले । समुत्पादयति स्वैरं, नवीनवर्णकाऽऽकृतीः ॥ १८२ ॥
परन्त्वस्मिन्सुमे नैत-त्सम्भवत्यनुमानकम् । यतोऽहं निश्चयाद्वेद्मि, सप्तपर्णमिदं सुमम् ॥ १८३ ॥
पीतवर्णोऽस्य नैवाऽस्ति, परं पद्मरजः कणाः । संलग्नास्तेन तत्पुष्पं, किञ्चित्पीतमभूभ्भनु ॥ १८४ ॥
तातेनोक्तं मदीयेन, वाटिकामध्यवर्त्तिनः । सप्तच्छदस्य कुसुमेऽब्जरजःसंभवः कुतः ॥ १८५ ॥
तात ! ह्येतस्य गन्धोऽयं, वर्त्तते बहुधाऽमलः । तत्राऽप्यम्बुजसद्गन्धो ज्ञायते बहुलः स्फुटः ॥ १८६ ॥
तस्मादनुमितिः कार्या, सितीभूतमिदं सुमम् । पङ्कजस्य रजोव्याप्त्या, पीतवर्णमभूत्पितः ? ॥ १८७ ॥
सप्तच्छदसमीपेऽत्राऽभविष्यच्च जलाशयः । शरद्यस्यां पयोजानि, बहूनि स्फुटितानि वै ॥ १८८ ॥
पीतेन रजसा तत्र, रक्तेषु कमलेषु च । मधुस्वादरता भूरि-सरघाः संस्थिताः खलु ॥ १८९ ॥
उड्डीय तास्ततो यान्त्यः सप्तच्छदसुमे सिते । निजपक्षेषु संलग्नान् रेणून् क्षिप्त्वा गताः पुरः ॥ १९० ॥
अनेनैव क्रमेणेदं पुष्पं पीतप्रभामयम् । जातमस्ति न चाऽन्योऽत्र, संभवो विद्यते पितः ? ॥ १९१ ॥
मदुक्तवचनस्याऽस्य, प्रतीतिर्वो भविष्यति । अस्माकं पुष्पलाविन्याः, कथनेन पितः ! स्फुटा ॥ १९२ ॥
मदीयं वचनं श्रुत्वा, स्पृष्ट्वा करतलं पिता । भाले मे प्रेमतोऽवादीच्छोभनं तदुदीरितम् ॥ १९३ ॥
मयाऽप्यनुमितश्चैत-त्तथापि त्वां परीक्षितुम् । अयं प्रश्नो मयाऽकारि, बुद्धिसाध्योऽतिकौतुकात् ॥ १९४ ॥

इदानीं लग्नयोग्या त्वं, जाताऽसि निश्चितं सुते ! । तव योग्यं वरं श्रेष्ठ–मानयिष्ये गुणाऽऽकरम् ॥ १९५ ॥
अस्मिन्नवसरे माता, जगाद पितरं मम । सप्तपर्णतरुं द्रष्टुं, मदिच्छा वर्त्तते भृशम् ॥ १९६ ॥
तातेनोक्तं रमावृन्दैः, सार्द्धं गच्छ यथेच्छया । बहिःसञ्चरणाल्लाभो–भविष्यति तवाऽपरः ॥ १९७ ॥
गृहाधिकारिणं तात–स्ततो ज्ञापयति स्म मे । उद्यानिकायै श्वः प्रात–र्वाटिकायां गमिष्यति ॥ १९८ ॥
स्त्रीमण्डलं महानन्दं, चिकीर्षु प्रीतिपूर्वकम् । तस्मात्सर्वव्यवस्थां त्वं, कारयस्व यथोचितम् ॥ १९९ ॥
भ्रातृपत्नीसखीदासी–भिश्चाहं बहुमानिता । भोजनस्य प्रदात्री मे, दासी प्रोवाच मामिति ॥ २०० ॥
भोजनाऽवसरो जातः, कुरुष्व भोजनं स्वसः ! । निरिन्धनो यथा वह्नि–र्नश्यत्यन्नं विना वपुः ॥ २०१ ॥
यथा कालं हि भोक्तव्यं, समयान्तरभोजनात् । व्याधयो विविधा देहे, संक्रामन्ति प्रमादिनाम् ॥ २०२ ॥
निशाकरपयःश्वेता–क्षैरेयी गुणवत्तरा । आस्वादितो मया पाको–घृतखण्डमयस्ततः ॥ २०३ ॥
हस्तप्रक्षालनं कृत्वा, गृहीत्वा मुखवासकम् । हस्ताऽऽननोपरि तैल–मर्दनं च मया कृतम् ॥ २०४ ॥
गमनं वाटिकायां श्वः, स्मरन्त्यः पुरयोषितः । आनन्दमेदुरारम्भाः, रेजिरे तुष्टमानसाः ॥ २०५ ॥
तदानीमेव विश्राम–निद्राजिघृक्षया निशा । समागता च शुद्धा सा, मया नीताऽपि मोदतः ॥ २०६ ॥
निद्रा यदा नयनयो–रागता दीप्ततेजसा । तदानीमेव पर्यङ्के, सुप्ताऽहं सुखदायके ॥ २०७ ॥
समुत्थाय प्रभातेऽहं, हस्ताऽऽननविशोधनम् । विधायाऽर्हत्प्रणामश्चा–स्मरं साधुगुणावलीम् ॥ २०८ ॥

संक्षेपतस्ततः कृत्वा, प्रतिक्रमणमुत्सवात् । कृताऽऽवश्यकसत्कृत्या, व्यस्मरं दुरितक्रियाम् ॥ २०९ ॥
बहूनां योषितां रात्रि-र्दुर्लंध्याऽभूत्ततो निशाम् । शपन्ति स्म व्यलीकञ्च, वदन्ति स्म परस्परम् ॥ २१० ॥
कतिचिच्च खलूद्याने, दध्युरेवं वराङ्गना । किं किं विलोकयिष्यामः, सरःस्नानात् कियान्मदः ॥ २११ ॥
इत्यादिकं वदन्त्यस्ता-योषितोऽखिलयामिनीम् । न्यवर्त्तयन्ननेकेषु, विषयेषु स्थिराशयाः ॥ २१२ ॥
उद्यानिकाव्यवस्थाञ्च, विधातुं मुख्यकार्यकृत् । किङ्करानुचिताँल्लात्वा, यामिन्यन्तेऽगमद्वनम् ॥ २१३ ॥
पूर्वाऽऽकाशाम्बुजं कुर्वन्, प्रफुल्लं नभसि व्रजन् । सूर्योऽपि शिखरं प्रापत् पूर्वाद्रेः कर्मसाक्षिकः ॥ २१४ ॥
काश्चन योषितो भिन्नवर्णानि वसनान्यधुः । कार्पासानि च कौशेया-न्यतिस्निग्धानि का अपि ॥ २१५ ॥
बहुमूल्याम्बरधरा-नानाऽलङ्कारभूषिताः । नवयौवनसंपन्नाः स्त्रियो निश्चक्रमुर्बहिः ॥ २१६ ॥
मम माता तदानीं सन्मुहूर्त्ते सज्जिताऽभवत् । भव्यालङ्कारसद्वेष-वृद्धनार्यन्तु संगताः ॥ २१७ ॥
तदनु प्रमदाः सर्वाः, समानवयसः शुभाः । प्रचेलुश्चञ्चलाश्चैतो-हारिण्यो हरिणीदृशः ॥ २१८ ॥
नूपुरमेखला भूषा-ध्वनिगर्जद्गृहाङ्गणम् । संघप्रयाणसमये, वाद्यनादमिवाऽकरोत् ॥ २१९ ॥
संघप्रयाणवृत्तान्तं, मन्माता मामचीकथत् । सखीभिः सप्रमोदाभिर्महोत्सवचिकीर्षया ॥ २२० ॥
अनेकरत्नभूषाभि-र्भूषिता अभवन्मम । सहचर्योऽहमेताभ्योऽभ्यधिकाऽलङ्कृताऽभवम् ॥ २२१ ॥
महामूल्यैरलङ्कारै-स्ताभ्यस्त्रिगुणदीप्तिका । चम्पकस्य यथा पुष्पं, कान्तिमत्यभवं तदा ॥ २२२ ॥

ततो मण्डलमध्येऽहं, सखीनां मोदधारिणी । प्रासादस्याऽङ्गणं भव्य-माश्रयं सुन्दराऽऽकृतिः ॥ २२३ ॥
विलोकितं मया तत्र, प्रमदावृन्दमुत्कटम् । स्वर्गनारी समानाऽऽभं, दीव्याऽऽभरणभूषितम् ॥ २२४ ॥
स्वकीयपरिवारेण, वेष्टितं सुसमाहितम् । अहमहमिकया गन्तुं, प्रवृत्तं वाटिकां प्रति ॥ २२५ ॥
अनर्घ्यरत्नराजीभिः, कलितललिताम्बरम् । वीक्षमाणं चलद्दृष्ट्या परस्परमिवाऽसकृत् ॥ २२६ ॥
रथः सारथिना सज्जी-कृतोऽभूत् मत्कृते वरः । मां विलोक्य स्थितस्तत्र सोऽप्यवोचत् कृतत्वरः ॥ २२७ ॥
भगिन्यत्र समागच्छ, त्वदर्थं श्रेष्ठिना रथः । सुन्दरोऽयं त्वदीयेन, जनकेन विनिश्चितः ॥ २२८ ॥
एवमुक्त्वैव तेनाऽऽशु, स्यन्दने विनिवेशिता । आस्तृताऽनर्घ्यमाणिक्यास्तरणे मन्दरध्वनौ ॥ २२९ ॥
मम दासी सखी चाऽस्मिन्, रथे सारसिका अपि । उपविष्टाऽथ सा क्षुद्रघंटिकानादितोऽव्रजत् ॥ २३० ॥
अस्माकं रक्षकः पश्चा-न्निजवेषधरोऽचलत् । पार्श्वतो योषितां वृन्दै-र्मार्गोऽपि दुर्गमोऽभवत् ॥ २३१ ॥
संघोऽस्माकं राजमार्ग-मध्येऽचालीत्प्रतिस्थलम् । जनास्तु वृन्दशो भूत्वा, मुहूरस्मान् व्यलोकयन् ॥ २३२ ॥
योषितो निजहर्म्याणां, वातायनगताऽऽननाः । व्यलोकयन्त भूयोऽपि, तृप्तिहीनाशयाः समाः ॥ २३३ ॥
विलोक्य तत् तथाश्चर्य-चकिताऽऽसं जनाऽन्तिके । लोका अपि महामार्गे, गृहवातायनेषु च ॥ २३४ ॥
रत्नानि जडितानीव, स्थिरीभूता जडाशयाः । निरीक्ष्याऽस्मान् व्यराजन्त युगपन्न्यस्तदृष्टयः ॥ २३५ ॥
रथस्थां व्रजतीं लक्ष्मीं, स्वर्गीव जनता समा । मामेव प्रेक्षितुं लग्ना ह्येकदृष्ट्या त्वरान्विता ॥ २३६ ॥

यूनां च नगरस्थानां, हृदयान्यदहँस्तथा । विलोक्य मां रुजार्त्तानां, विषमायुधपीडया ॥ २३७ ॥
तेषां यथा धृताऽऽधीनां जीवनाशाऽपि दुर्लभा । कामातुरा नरा लोके, किमापत्तिं न यान्ति हि ॥ २३८ ॥
युवतीनां विचित्रेच्छा, समभूद्यदि सौभगम् । स्वर्गस्थमिष्यतेऽस्माभि-स्तादृग्भिर्भाव्यमन्वहम् ॥ २३९ ॥
मदीयमुखसौन्दर्या-द्रूपलावण्यतस्तथा । राजमार्गस्थलोकोपि चकितोऽभूदिवाऽखिलः ॥ २४० ॥
अतिसुन्दरदृश्येन, मार्गशोभा प्रथीयसी । विहायसि विशालेऽपि, न ममौ मानवर्जिता ॥ २४१ ॥
तत्राऽपि मामकीनं तु, सौन्दर्यचित्तमोहकम् । वृत्तान्तमिदमाचख्युः सख्यो माऽङ्गिमुखाच्छ्रुतम् ॥ २४२ ॥
उद्यानद्वारमायाताः, क्रमेण वयमुत्सवात् । वतेरुः स्यन्दनात्सर्वा-योषितः स्वजनान्विताः ॥ २४३ ॥
तत्र प्राहरिकान्मुक्त्वा, वयं पर्यटितुं वने । निर्गताः स्वेच्छया सर्वा-रम्यवल्लीवितानके ॥ २४४ ॥
नन्दनोद्यानवर्त्तिन्यो देव्य इव पुराङ्गनाः । विहर्तुं विश्वतश्चेरु-र्यथेच्छं पादपान्तरे ॥ २४५ ॥
प्रफुल्ला भूरुहोऽन्योऽन्य, मिलित्वा गोपुराऽऽकृतिम् । भेजिरे तदधो भूत्वा, व्रजन्ति स्म पुराङ्गनाः ॥ २४६ ॥
वृक्षाणां पुष्पिताः शाखाः, रम्याश्चिच्छिदुरुत्सुकाः । प्रमदाः स्वेच्छया क्रीडां, कुर्वन्त्यश्च पदे पदे ॥ २४७ ॥
तस्मिन्नवसरे माता, जगाद मम सोत्सवम् । मत्पुत्र्याकथितं सप्त-च्छदं वीक्षामहे वयम् ॥ १४८ ॥
सरोवरस्य तीरेऽत्र, विकसत्कुसुमश्रियम् । स्थितं सौरभ्यसंपत्त्या, वासयन्तं दिगन्तरम् ॥ २४९ ॥
निशम्य तद्गिरं सर्वाः, वनिता मुदिताऽऽननाः । तां दिशं गन्तुमातेनुः, प्रक्रमं क्रमतः शुभाम् ॥ २५० ॥

सखीभिः स्यन्दनाच्चाहं–मवतीर्य च सस्पृहम् । मुग्धचित्ता विशालाक्षी, प्रविष्टोद्यानभूमिकाम् ॥ २५१ ॥
शरदृतुमधिप्राप्यो–द्यानं पुष्पाण्यनेकधा । भूषयामासुरुन्निद्रा–ण्यमेयगन्धभाञ्जि वै ॥ २५२ ॥
प्रतिपुष्पं परिभ्राम्यन्, द्विरेफ इव मुग्धधीः । परितो भ्रममाणाऽहं, नाऽलभे तृप्तिमुत्तमाम् ॥ २५३ ॥
विहगानां विचित्राणा–मनेकेषां निनादिनाम् । निशम्य मधुरालापान् कर्णौ मे तृप्तिमीयतुः ॥ २५४ ॥
द्यूतकारा यथा क्षीणा–विषण्णाः स्युर्निजोद्यमात् । तथाऽऽरम्भे वसन्तस्य, क्षीणबर्हा मयूरकाः ॥ २५५ ॥
संभोगविमुखा व्यग्राः स्निग्धकण्ठा इतस्ततः । भ्रमन्तो भूरुहां मध्ये, दृष्टिगोचरमागताः ॥ २५६ ॥
कदलीनाञ्च तालानां, मण्डपा गह्वराणि च । बालानां क्रीडनार्हाणि, व्यलोकयन्त विशेषतः ॥ २५७ ॥
कुसुमैः श्वेतवर्णानां, सप्तच्छदधरारुहाम् । सन्निधौ नीलबाणाश्च रक्ताऽशोका बभासिरे ॥ २५८ ॥
पर्यटन्त्यो वयं रम्यमेकं सप्तच्छदं तरुम् । व्यलोकयाम पुष्पौघै–र्नम्रीभूतं समन्ततः ॥ २५९ ॥
श्वेतभावं समापन्नाः, शाखास्तस्य सितैः सुमैः । अव्रजन्निम्नभावत्वं, सरघाणां कदम्बकैः ॥ २६० ॥
तेनैष नीलश्रृङ्गार–भूषित इव सर्वतः । अदृश्यत मनस्तृप्ति–दायकः सर्वदेहिनाम् ॥ २६१ ॥
वायुना पतितान्यस्य– पुष्पाणि भुवि वायसाः । श्वेतम्रक्षणपिण्डान्वा मत्वोड्डीय विचक्रमुः ॥ २६२ ॥
सौगन्धिकं बृहत्पुष्पं, रजताऽमत्र कान्तिभाक् । मयैकं तस्य वृक्षस्याऽवचितं लुब्धचेतसा ॥ २६३ ॥
तदैकं सरघावृन्दं, पङ्कजाऽऽमोदलोलुपम् । समागतं समाकृष्टं, मदीयं मुखपङ्कजम् ॥ २६४ ॥

मदीयं मुखमायान्त्यस्ता मया वारिता अपि । मरुच्चलल्लतावन्मे करं व्याधूय संश्रिताः ॥ २६५ ॥
तत्पीडया मया चक्रे, पूत्कारस्य परम्परा । निवृत्तगमना चाहं, व्यग्रचित्ताऽभवं क्षणात् ॥ २६६ ॥
सरघाध्वनिमिश्रैव, विरावैर्वयसां तथा । मदीयोद्घोषणां काऽपि, नाऽशृणोत्सहचारिणी ॥ २६७ ॥
अश्वफेनाऽधिकस्निग्धोत्तरीयाञ्चलतो मया । मुखमाच्छादितं तेन, निवृत्ता मधुमक्षिकाः ॥ २६८ ॥
इतस्ततः प्रधावन्त्या-रत्नालङ्कृतयो मम । विशीर्य त्रुटिताः काश्चित्, पतन्ति स्म धरातले ॥ २६९ ॥
आरोपिताऽनङ्गबाणा, मञ्जुला कटिमेखला । कटिभ्रष्टाऽभवत् क्वाऽपि, वनोद्देशे मनोरमे ॥ २७० ॥
तथाऽपि वेदना व्यग्रा, भूषणान्यस्मरन्त्यहम् । कदलीमण्डपं भव्यं, धावित्वा प्राविशं क्षणात् ॥ २७१ ॥
तत्र स्थिता सारसिका, सखी मे सहचारिणी (हृदयङ्गमा) । विलोक्य मां स्निग्धचेताः, सान्त्वयामास सत्वरम् ॥२७२ ॥
कथितञ्च तयाऽद्याऽपि, वल्गिता मधुमक्षिकाः । सखि ! चिन्ता त्वया काचित्, नैव कार्या तथाविधा ॥ २७३ ॥
यं दृष्टुमागताः सर्वा-वयं विस्मितमानसाः । तस्य सप्तच्छदस्याऽऽशु, सन्निधौ संगता मुदा ॥ २७४ ॥
सरोजगन्धहारिण्यो-ऽनेकशो मधुमक्षिकाः । तस्मिन् तरुवरे तस्थु-रुत्पतन्त्यो मुहुर्मुहुः ॥ २७५ ॥
पटलं पूर्णचन्द्राभं, त्यक्त्वैता मधुमक्षिकाः । शारदानि सुमान्यत्र समागत्य समाश्रिताः ॥ २७६ ॥
मत्सार्थवनिता यास्तु,पुरा तत्र गतास्तरौ । ताभिस्तत्पुष्पमुग्धाभि-स्तच्छाखा अपि खण्डिताः ॥ २७७ ॥
मत्सख्याः स्कन्धमालम्ब्य,वामहस्तेन चाग्रतः । शनैः शनैरहं याता, लक्षीकृत्य सरोवरम् ॥ २७८ ॥

अनेकजातिपुष्पाणि, व्यकसन् तत्तडागके । उद्यानभूषाभूतानां सरस्तटविलासिनाम् ॥ २७९ ॥
विहगानां कलध्वानै-र्नादिता सकला स्थली । सरघाभिश्च सर्वत्र, व्याप्तोद्यानधराऽभवत् ॥ २८० ॥

रक्तानि पुष्पाणि विभातकालं श्वेतानि पुष्पाणि निशाकराभाम् ।
नीलानि पुष्पाणि च वार्दलानि, संस्मारयन्ति स्म मनीषिणां द्राक् ॥ २८१ ॥

सरघाणां च हंसाना-मव्यक्तध्वनिभिर्भृशम् । अन्तरिक्षमभूद् व्याप्तं, समन्ताद्दिक्षु विस्तृतैः ॥ २८२ ॥
सरस्तरङ्गवृन्देषु, कुसुमानि मरुद्गणैः । दोलायन्ते स्म कृष्टानि, विचित्रवर्णभाञ्जि च ॥ २८३ ॥
प्रजल्पन्तश्च कारण्डा-रथाङ्गमिथुनानि च । सितच्छदधरा हंसा-अदृश्यन्त मया तदा ॥ २८४ ॥
पीताम्बुजरजोलुब्ध-सरघामण्डलानि च । सुवर्णभाजनस्थानि, नीलरत्नानि वा बभुः ॥ २८५ ॥
कार्पासस्वच्छसत्पक्षाः, सैकतक्रीडनोत्सुकाः । शरद्वास्य समं स्वीयं, हास्यं व्यामिश्रयन्निव ॥ २८६ ॥
ततोऽहं चक्रवाकानां, स्नेहसंबद्धचेतसाम् । मिथः प्रेम्णा प्रसिद्धानां, मिथुनानि व्यलोकयम् ॥ २८७ ॥
पीतवर्णानुषङ्गेण, रक्ताङ्गाश्चक्रवाककाः । रमणीस्तनसादृश्यं, दधुः कर्बुरवर्णकाः ॥ २८८ ॥
कासारे रक्तवर्णानि, स्निग्धपत्राणि यानि च । विष्टराऽऽभानि तेष्वेते, चक्रवाका विशश्रमुः ॥ २८९ ॥
कियन्तश्च कियत्पत्रा-सनेषु लोहिताङ्गकाः । रथाङ्गाः स्नेहतो लुब्धाः सञ्जाता इव संस्थिताः ॥ २९० ॥
स्वकीयवनितास्नेहं, पोषयन्तः समन्ततः । प्रमदाभिः समं सङ्गो-देहिनां जायते प्रियः ॥ २९१ ॥

यदैतस्य तडागस्य, शोभामैक्षेऽहमद्भुताम् । तदानीं चक्रवाकानां, मिथः स्नेहमनल्पकम् ॥ २९२ ॥
विलोक्य मामके चित्ते, विस्मिते व्यस्फुरन्स्वयम् । वितर्का विविधाश्चित्रा—अगम्या कतिचिन्नवाः ॥ २९३ ॥
जन्मन्यस्मिन्नानुभूता, कल्पना काऽपि चेतसि । समुद्भूताऽद्भुताऽकाले, मत्कर्मजनिता तदा ॥ २९४ ॥
तद्विचारनिमग्नायाः, पूर्वजन्मस्मृतिर्मम । साक्षाद् बभूव तत्कालं, मूर्च्छा प्राप्ता च वेगतः ॥ २९५ ॥
अचेतनशरीरेव, भूपीठे पतिता क्षणात् । लुलोठ वेदनार्त्ताऽहं, विनष्टदैहिकस्मृतिः ॥ २९६ ॥
यदाऽहं चेतनां प्राप्ता, तदा मे चक्षुषोर्ममौ । अश्रुधारा न चित्तश्च भृशं विह्वलतामगात् ॥ २९७ ॥
लब्धसंज्ञा मिलन्नेत्रा, क्षणं वाग्वैभवोज्झिता । विलपन्ती विमूढात्मा, हृदि घूर्णितलोचना ॥ २९८ ॥
तस्मिन्नवसरे सद्यः, सखी मे प्रियकारिणी । पद्मपत्रपुटं कृत्वा, जलमानीय शीतलम् ॥ २९९ ॥
सिषेच पीडया तप्तं, हृदयं चेक्षणद्वयम् । मद्भक्तितत्परा ह्यासीत्, मदीयहितमानिनी ॥ २०० ॥
समुत्थाय ततोऽदूरे, कदलीमण्डपस्थिताम् । नीलोत्पलसमां कृष्णां, गत्वा शीलामुपाविशम् ॥ २०१ ॥
पश्चात्सा मे सखी शुद्ध—हृदया दुःखभागिनी । स्वसः ! किं जायते दुःखं, ब्रूहीति पृच्छतिस्म माम् ॥ २०२ ॥
भ्रान्तचित्ता कथं जाता, श्रान्ताऽसि वाऽध्वखेदतः । सरघादंशतः पीडा, संजातेयं वद स्फुटम् ॥ ३०३ ॥
अश्रूण्यमार्जयत्सा तु, अमान्ति मम नेत्रयोः । अतिप्रेम्णा विमुञ्चन्ती, चाऽस्रधारां स्वचक्षुषः ॥ ३०४ ॥
भगिनि ! ते कथं मूर्च्छा, समायाताऽति दुःखदा । यज्जानासि वद त्वं मां, तदुपायं करोम्यहम् ॥ ३०५ ॥

पीड्यते न वपुस्ताव-न्नैव कार्यं विलम्बनम् । व्याध्युपशमने सद्यश्चिकित्सा भिषजां मता ॥ ३०६ ॥
अयं रोगो महानस्ति, तीव्रपीडाविधायकः । उपेक्षा नैव कर्त्तव्या, हितमिच्छद्भिरात्मनः ॥ ३०७ ॥
यावत्साध्यो भवेद्रोग-स्तावत्कार्यं चिकित्सनम् । अन्यथा क्षतजापीडा, कुठारघाततां व्रजेत् ॥ ३०८ ॥
सख्या योग्यं वचः प्रोक्तं, तया श्रुत्वा मयाऽपि तत् । प्रतिवाक्यं यथायोग्यं, कथितं वल्गुचेतसा ॥ ३०९ ॥
स्वसः ! किञ्चिद्भयं नास्ति, न मे संभ्रमणाऽऽगमः । न श्रमो मेऽजनि क्लिष्टो-न दष्टा मक्षिकागणैः ॥ ३१० ॥
तावत्सा माऽवदत्तर्हि रामचापमिव क्षितौ । नीरङ्गं पतिता मूर्च्छा-मवाप्य कथमीदृशीम् ॥ ३११ ॥
भगिनि ! त्वं विजानासि, मदीयं सर्वचेष्टितम् । प्रियसख्यस्मि ते नूनं, किं वदामि तवाऽग्रतः ॥ ३१२ ॥
नीलरत्नोपमे रम्ये, गह्वरे तरुमण्डिते । सारसिका सखी प्रोक्ता, मया विश्वासभाजनम् ॥ ३१३ ॥
मरुताहतवल्लीव, मूर्च्छां प्राप्य धरातले । पतिताऽहं ब्रविष्यामि, तद्वृत्तान्तं निजं स्वयम् ॥ ३१४ ॥
आबाल्यात्त्वं सखी मेऽसि, सुखदुःखविभागिनी । वेत्सि त्वं मम गोप्यं तत्, वक्ष्ये मद्धृदयस्थितम् ॥ ३१५ ॥
किन्तु कस्याऽग्रतो नैव, कथनीयमिदं त्वया । वृत्तान्तं शपथो मेऽस्ति, गोपनीयं निजात्मवत् ॥ ३१६ ॥
रहस्यं मामकीनं त्वा-मन्तरा वेत्ति कोऽपि नो । अतः किं गोपनीयं मे, त्वदग्रे क्वापि संभवेत् ? ॥ ३१७ ॥
ततः सारसिका स्पृष्ट्वा-मत्पादाविदमब्रवीत् । कथयिष्यामि नो कस्या-प्यग्रे त्वच्छपथोऽस्ति मे ॥ ३१८ ॥
ततोऽतिवल्लभां प्रोचे, सखीं सारसिकामहम् । भूरिकष्टं ममेदानीं, वृत्तान्तं पूर्वजन्मनः ॥ ३१९ ॥

नयनाश्रुप्रवाहेण, वेदनोत्पादकं महत् । बहिर्निःसारितं गुप्तं, किं कुर्वे दुःखिता भृशम् ॥ ३२० ॥
मम भर्त्तुर्वियोगस्य, स्मरणं जातमस्ति मे । तद्दुःखेनार्दिता चास्मि, हृदयोद्भेदकारिणा ॥ ३२१ ॥
यादृक् स्नेहोऽनुभूतो मे, यद्दुखं भुक्तवत्यहम् । तत्सर्वं ज्ञापयिष्यामि, सावधानमनाः शृणु ॥ ३२२ ॥
सखी मे पार्श्वतोऽधीरा, श्रोतुं वृत्तान्तमद्भुतम् । तस्थावश्रुमुखी चाहं, प्रारभे मत्कथानकम् ॥ ३२३ ॥
अस्माकं देशतोऽदूरे, अङ्गदेशोऽस्ति वित्तवान् । शत्रुस्तेनभयं यस्मा–द्दूरादेव पलायितम् ॥ ३२४ ॥
दुष्कालजनिता पीडा, यस्मिन्न श्रूयते जनैः । निरीतिभावमाश्रित्य, राजते देशराडिव ॥ ३२५ ॥
सम्पदः सर्वदा सर्वा–मिथो मित्रत्वमागताः । वसन्ति स्म मुदा यस्मिन्नेकीभावगता इव ॥ ३२६ ॥
विपदो न पदं यस्मिन्, दधते कृशतां गताः । आरोग्यजनिताऽऽनन्द–मङ्गलानि पदे पदे ॥ ३२७ ॥
तस्मिन् चम्पाऽभिधा रम्या, नगरी वर्त्तते शुभा । यस्यामनेक आरामाः पुष्पवल्लीविराजिताः ॥ ३२८ ॥
सरांसि विस्तृतान्यासन्, संभृताम्बूनि भूरिशः । निर्मलानि विराजन्ति येषु पङ्कजपङ्क्तयः ॥ ३२९ ॥
महेभ्या यत्र राजन्ते, नाना वैभवशालिनः । जितस्वर्गिसुखा नित्यं, पूर्णीभूतमनोरथाः ॥ ३३० ॥
तद्देशमध्यतो गङ्गा, वहते जनपावनी । यस्यास्तटद्वयेऽनेक–नगरग्रामकर्वटाः ॥ ३३१ ॥
भ्राजन्ते भूतिसम्पन्ना–भूमिभूषणकारकाः । स्वर्गिसम्पत्तयो येषा–मग्रे विच्छायतां गताः ॥ ३३२ ॥
पतत्रिणां च वृन्दानि, मोदमानानि नित्यशः । पवित्रां यां निषेवन्ते, कमलाकरमण्डिताम् ॥ ३३३ ॥

सागरप्रियपत्नीव, रंहसा प्रतिधावति । साऽऽपगा स्वच्छपानीया, हंसश्रेणीनिषेविता ॥ ३३४ ॥
कादम्बकगणो रम्यः, कुण्डलानीव राजते । यस्याः सितच्छदश्रेणी, रसनेव विभासते ॥ ३३५ ॥
चक्रवाकयुगं यस्याः, स्तनयुग्ममिवाऽस्ति सा । रङ्गत्तरङ्गमालाभि–र्हसन्तीव विलोक्यते ॥ ३३६ ॥
यस्यास्तटेगजा मत्ता–वृषभा उज्ज्वलाङ्कका: । व्याघ्राश्चेहामृगा भूरि–भयदा सन्ति चित्रकाः ॥ ३३७ ॥
जलोपरि तरन्तश्च पक्करक्तघटा इव । युगलानि रथाङ्गानां, रमन्ते परया मुदा ॥ ३३८ ॥
अन्ये च पक्षिणोऽनेके, जलमध्यविहारिणः । भ्रमन्ति चिन्तया हीनाः, स्वतन्त्रा स्वेच्छयाऽनिशम् ॥ ३३९ ॥
सख्यहं प्राग्भवे तत्र रक्तपीतच्छदान्विता । चक्रवाकयभवं सौख्यं, स्वतन्त्रा भुक्तवत्यहम् ॥ ३४० ॥
चक्रवाकेषु यत्प्रेम प्रबलं स्थैर्यसंयुतम् । तादृशं नास्ति लोकेऽस्मिन्कुत्राऽपि स्नेहबन्धनम् ॥ ३४१ ॥
मत्पतिस्तु चलच्छीर्षः, कन्दुकाऽऽभशरीरकः । प्रसिद्धोऽभूत्समस्तेषु, वयःसु जलचारिषु ॥ ३४२ ॥
प्रवीणस्तरतां मध्ये, कोरण्टपुष्पसुन्दरः । नीलौ रोमविहीनौ तत्क्रमौ नीलाम्बुजोपमौ ॥ ३४३ ॥
यावज्जीवं स्वभावोऽभूत् तस्य सिद्धतपस्विवत् । सरलः स्नेहसम्बद्धमानसस्य दयामयः ॥ ३४४ ॥
क्रोधावेशस्तु निर्दग्धो प्रागेव तस्य मूलतः । प्रभावश्च तदीयो वै वर्ण्यते किमतःपरम् ॥ ३४५ ॥
प्रभाते लोहिते तेन समं तत्तुमना अहम् । उड्डीय स्नेहसम्बद्धा व्यद्दार्ष गगनाङ्गणे ॥ ३४६ ॥
दाम्पत्यप्रेमतो नित्यं वियोगं सोढुमक्षमौ । अवसाव सहैवाऽऽवां मिथः सौख्याऽभिलाषिणौ ॥ ३४७ ॥

विचित्रमधुरध्वानैः श्रोत्रञ्च हृदयाम्बुजम् । मोदयन्तौ तथाऽजस्त्रं वीनाम्बरचारिणाम् ॥ ३४८ ॥
अन्योन्य सुखमिच्छन्तावेकैकमनुसारिणौ । सार्धं क्रीडां प्रकुर्वाणावावां न क्वापि विच्युतौ ॥ ३४९ ॥
पद्मागारतडागेषु सरित्सु सैकतेषु च । विपिनेषु तथा सत्यस्नेहबः सहचारिणौ ॥ ३५० ॥
अकार्ष्व क्रीडनं यत्र तत्र निर्मानताजुषौ । विशुद्धमानसौ मन्दं मन्दं क्षेमङ्करौ मिथः ॥ ३५१ ॥
अन्यदाऽऽवां सहोत्पन्नैर्जलचारिविहङ्गमैः । गङ्गाम्बुसंभृते रम्ये कासारे मुदितौ स्थितौ ॥ ३५२ ॥
तावत्सूर्यातपातप्तो वनचारी मतङ्गजः । स्नातुकामो नदीतीरे वेगेनाऽऽशु समागतः ॥ ३५३ ॥
नरेन्द्रमाण्यवत्तस्याऽचलतां श्रवणौ मुहुः मृदङ्गवद्ध्वनिश्चापि निःससार शनैः शनैः ॥ ३५४ ॥
कदाचिद्राक्षसप्रख्यः सोऽतिभीतिप्रदायकम् । मेघनादसमं नादं चक्रिवान् चक्रवद् भ्रमन् ॥ ३५५ ॥
मदवारिस्रवद्गण्डः शुण्डादण्डमितस्ततः । भ्रामयन् क्वापि बभ्राम जलक्रीडाचिकीर्षया ॥ ३५६ ॥
सप्तच्छदसमानेन मदगन्धेन सर्वतः । दिशः सुरभयामास चतस्त्रः स मरुद्बलात् ॥ ३५७ ॥
तत्पश्चात् कुञ्जरो मत्तस्तटाचस्या रयाकुलः । वतीर्णश्च पिपासार्त्तः पयःपानविधित्सया ॥ ३५८ ॥
सैकते पादपद्धत्या गङ्गायाः कटिमेखलाम् । रचयन्निव सद्भक्त्या गजेन्द्रः स व्यलोक्यत ॥ ३५९ ॥
उदधेर्महिषी रम्या गङ्गा तरमाद्भयाकुला । कल्लोलान् स्वान् समादाय धावन्तीव व्यदृश्यत ॥ ३६० ॥
पीतवारिः स शुण्डेन फूत्कृत्योच्छालयन् जलम् । वार्दलाच्छादितां चक्रे सरितं तां क्षणाद्गजः ॥ ३६१ ॥

ततोऽगाधे प्रवाहे स प्रविष्टोऽधस्तले मुदा । करेण निजपृष्ठे चाऽऽवाहयत् तत्प्रवाहकम् ॥ ३६२ ॥
आपगायास्तरङ्गान् स तथोड्डायितवान् मदात् । अस्मदाश्रितकासारमागतास्ते समन्ततः ॥ ३६३ ॥
करोर्ध्वीकरणादोष्ठजिह्वाभिर्विवृताननम् । अञ्जनाद्रेः सुशोभाढ्यां जिगाय सैन्दुरी दरीम् ॥ ३६४ ॥
मदीयस्वामिना सार्धं सावधाना नभस्तलम् । त्वरितमगमं त्रस्तविहगान्तरवत्तदा ॥ ३६५ ॥
ततो नद्या विनिःसृत्य कुञ्जरो निजवर्त्मनि । यथेच्छयाऽतिविश्वस्तो गच्छति मदराजितः ॥ ३६६ ॥
तदानीं पुष्पमालाभिर्भूषिताङ्गो धनुर्धरः । यमदूतसमस्तत्र युवाऽऽखेटक आगतः ॥ ३६७ ॥
अनुपानत्क्रमो व्याघ्रनखरो दीर्घदंष्ट्रकः । अतीवदृढगात्रः स ददृशे चित्रलोचनः ॥ ३६८ ॥
दृढशिलातलोरस्कः प्रत्यश्चेव करावुभौ । धनुषो वत्रवद् दीर्घौ भोगिभोगसमाकृती ॥ ३६९ ॥
तस्य श्मश्रुर्भृद्रक्ता स्निग्धकान्तिर्विशेषतः । विदीर्णौष्ठयुगस्यापि बलिष्ठां समधिष्ठितम् ॥ ३७० ॥
प्रचलन्मस्तकं तस्य किञ्चिद्वक्रकचाचितम् । केशान्ता नागजिह्वाभा अलक्ष्यन्त च दूरतः ॥ ३७१ ॥
तिग्मांशुरश्मिजालेन संतप्तात्पुराकृतिः । तस्यासीच्छ्यामला भूरिर्भूरिशौर्यविराजिनः ॥ ३७२ ॥
तस्मात् स राक्षसाऽऽकारः पृष्ठबद्धतुणीरकः । यमदूत इव क्षुद्रचेष्टितोऽलक्ष्यत ध्रुवम् ॥ ३७३ ॥
पर्यधत्त शरीरे स व्याघ्रचर्म भयानकम् । मषीकज्जलरेखाभिरिव लाञ्छितमन्तरा ॥ ३७४ ॥
व्याधः स तं गजं दृष्ट्वा तरुमेकं समाश्रयत् । धावित्वा विपदुत्पत्तौ, समारोहसमीहया ॥ ३७५ ॥

ततो गाढं समाकृष्य धनुष्यारोप्य बाणकम् । लक्ष्यीचकार नागं तं सावधानतयाऽसुधीः ॥ ३७६ ॥

भ्रष्टलक्ष्यः स बाणस्तु दुर्भाग्ययोगतो व्रजन् । मन्मुखमुत्पतन्तं मे भर्त्तारमलगद् भृशम् ॥ ३७७ ॥

शरेण तेन तत्पक्षोऽच्छिद्यताम्बुजनालवत् । सार्धं तेनापतत्सोऽपि मूर्च्छां प्राप्य जलान्तिके ॥ ३७८ ॥

भर्त्तुर्वेदनां सोढुमक्षमाऽहं धरातले । सन्निधौ पतिता तस्य मूर्च्छिता दुःखिता भृशम् ॥ ३७९ ॥

यदाऽहं चेतनां प्राप्ता क्षणाच्छीतेन वायुना । निदग्धहृदयाऽक्षिभ्यां तदाऽश्रयं कियत् क्षणम् ॥ ३८० ॥

भर्त्तुस्त्रुटितः पक्षो वीक्षितस्तस्य सन्निधौ । पवनेनाहतं पद्ममिवेक्षाऽग्रतया मया ॥ ३८१ ॥

वपुषि चालिते तस्य, लग्नस्तीक्ष्णः शरो मया । वीक्षितो व्याधनिर्मुक्तो वेपमानशरीरया ॥ ३८२ ॥

स पक्षः पतितस्तस्य समीपेऽम्बुजपत्रवत् । विशीर्णतां गतोऽराजद्दैवदृष्टिर्गरीयसी ॥ ३८३ ॥

मज्जत्वंभसियातु मेरुशिखरं शत्रुञ्जयत्वाहवे, वाणिज्यं कृषिसेवनादिसकला विद्याकलाः शिक्षतु ।
आकाशं सकलं प्रयातु खगवत्कृत्वा प्रयत्नं परं, नो भाव्यं भवतीह कर्मवशतो भाग्यस्य नाशः कुतः ? ॥ ३८४ ॥

रक्तपीतघटः शुद्धलाक्षारागेण चिह्नितः । तथा मत्स्वामिनो देहो रक्तबिन्दुभिरञ्चितः ॥ ३८५ ॥

शरीरे पतितान् बिन्दून् विलोक्योत्प्रेक्षयेज्जनः । चन्दनस्य रसेनाक्तमशोककुसुमं खलु ॥ ३८६ ॥

तथाप्यसौ जलप्रान्ते पतितो मम वल्लभः । बभौ यथाऽस्तगो भानुः पलाशविपिने यथा ॥ ३८७ ॥

मच्चञ्च्वा तच्छरीरस्थं शरं निष्काम्य यत्नतः । पक्षाभ्यां वीजनं कृत्वा तं निश्चेष्टमहं मुहुः ॥ ३८८ ॥

प्रियं प्राबोधयं दीनवदना साश्रुलोचना । स तु निश्चेतनीभूय पतितो नाऽवदद्भुवि ॥ ३८९ ॥
तथापि मुग्धया ज्ञातं मया तस्मिन् क्षणे हृदि । जीवन्नास्तेऽधुनाप्येष शरपीडातिमूर्च्छितः ॥ ३९० ॥
यदा मृत इति ज्ञातं तदाऽहं दुःखिता भृशम् । तद् दुःखवर्णनं नैव कर्त्तुं केनापि शक्यते ॥ ३९१ ॥
कियत्कालमहं जाता यतो निश्चेतना तदा । दुरन्तवेदना-मग्ना निर्विण्णा जीवनादपि ॥ ३९२ ॥
लब्धास्मृतिमहं पश्चाचञ्च्वा वर्हाणि शोकतः । पर्यक्षिपं सुरम्याणि विलपन्ती मुहुर्मुहुः ॥ ३९३ ॥
मद्भर्तृपक्षगुम्फेषु चञ्च्वाघाताः पुनः पुनः । कृताश्चालिङ्गनं दत्तं पक्षाभ्यां तच्छरीरके ॥ ३९४ ॥
परितः सञ्चरन्ती तं गतासुं प्रेमबन्धनात् । अकार्षं रोदनञ्चैवं विषण्णमानसा भृशम् ॥ ३९५ ॥
गङ्गाया भूषणं केन पापेन निहतो भवान् । स्वामिन् ! सुखेर्ष्यया केन विनाथाऽहं विनिर्मिता ॥ ३९६ ॥
यतो वियोगजं दुःखं वह्निज्वालेव मानसम् । प्रज्वालयति मेऽत्यन्तं कस्याग्रे पूत्करोम्यहम् ॥ ३९७ ॥
क नु मां त्वदधीनजीवनां प्रविकीर्य क्षणनष्टसौहृदः । नलिनीं क्षतसेतुबन्धनो जलसंघात इव प्रधावितः ॥ ३९८ ॥
विधिना कृतमर्थहिंसनं ननु मां तेऽत्र वधे विमुञ्चता । अनपायिनि संश्रये तरौ द्विपभग्ने पतनाय वल्लरी ॥ ३९९ ॥
दुःखदावानले मग्नाः प्रभूतभयदायिनि । विचारातिविमूढात्मा शुद्धिहीनाऽस्मि साम्प्रतम् ॥ ४०० ॥
स्वामिन् ! सरोवरोपान्ते त्वद्वियोगव्यथार्दिता । क्रीडानन्दमहं भोक्तुं कथं शक्ष्यामि पूर्ववत् ॥ ४०१ ॥
आवयोरन्तरे पद्मपत्रंचेद्व्यवधायकम् । चिरकालवियोगस्य दुःखं मेऽजनि शल्यवत् ॥ ४०२ ॥

इतस्ततः काष्ठदण्डान् संनिधाप्य स दुष्टधीः । प्राज्वालयत्प्रियस्वामिशरीरावयवान् समान् ॥ ४१७ ॥
दावानलातिशायी स चिताग्निर्भयदायकः । संजातः शोकसंविग्नमानसाया मम ध्रुवम् ॥ ४१८ ॥
विचारश्रेणिकाऽऽकृष्टा विषादायत्तमानसा । अभाषिषमहं प्राणवल्लभं मृत्युना हतम् ॥ ४१९ ॥
स्वामिन्नद्यावधि प्राणप्रियमित्र समेजले । न्यवसस्त्वं कथं शत्रूभूतमग्निं सहिष्यसि ॥ ४२० ॥
दह्यसे वह्निना येन दुःसहः सोऽन्यजन्तुभिः । सहिष्यसे कथंनाथ ! चितावह्निमनल्पकम् ॥ ४२१ ॥
प्रमोदशोकजनकं, दैवं नाद्यापि तृप्तिभाक् । आवयोर्येन सम्बन्धो विधायैव विनाशितः ॥ ४२२ ॥
रे ! रे ! मद्धृदयं नूनं विद्यते लोहनिर्मितम् । अन्यथैवं भवद्दुःखं कथं पश्यति वल्लभ ! ॥ ४३३ ॥
वियोगजन्यदुःखेन पीडिता दूरवासतः । त्वत्पार्श्वे शयनं कुर्यां चितायां तद्वरं प्रिय ! ॥ ४२४ ॥
इत्थं विषादवेगेन सुलभस्य रमाजने । शूरत्वस्य प्रभावेण पातिव्रत्यपराऽभवम् ॥ ४२५ ॥
पत्यौ दिवंगते या स्त्री भर्तारमनुगच्छति । सा लोकेऽस्मिन् यशो लब्ध्वा परत्र सुखमाप्नुयात् ॥ ४२६ ॥
इति संचिन्त्य चित्तेन पतिवर्त्मानुगामिनी । अभवं भूरिदुःखाऽहं दुःसहं किमु दुःखिनाम् ॥ ४२७ ॥
आत्मानमनुगच्छद्यच्छरीरं स्वामिनः प्रियम् । वीक्ष्य तत्प्राविशं चैत्यं हव्यपाहं कृतत्वरम् ॥ ४२८ ॥
तत्क्षणे सुखमग्नायाः सुप्तायाः स्वामिनोऽन्तिके । तप्ताङ्गारमयोऽप्यग्निर्हिमवत्सम्प्रजायत ॥ ४२९ ॥
यतो मत्स्वामिनः पार्श्वं समवाप्यातिनिर्भयम् । संस्थितायाः कुतोऽशान्तिर्जायते मम दुःखदा ॥ ४३० ॥

सुमोघे मक्षिकेवाऽहं चिताग्नौ ज्वलिते भृशम् । निमग्नाऽतिमृदुस्वान्ता निजदुःखान्तकारिणि ॥ ४३१ ॥

वह्निना तेन मत्स्वामिमङ्गिनी च विनिर्मिता । परोपकारसंसक्ता भवन्ति हि महाशयाः ॥ ४३२ ॥

यद्यप्यग्निशिखा चित्रा दहन्ती मां समन्ततः । अप्रमत्तदपि क्षोभो नाऽभून्मे पतिचिन्तया ॥ ४३३ ॥

सारसिके ! सतीभूत्वा पतिवर्त्मानुसारिणी । विषमं जीवितं मत्वा देहमत्याक्षमञ्जसा ॥ ४३४ ॥

( तस्या मनोरथसिद्धिः साधना च– )

तरङ्गवत्यथोवाच निजवृत्तान्तमद्भुतम् । कामनासाधनासिद्धिनिदानं प्राग्भवोद्भवम् ॥ ४३५ ॥

सख्यग्रेऽस्मन्मृतेर्वार्तां कुर्वन्ती मूर्च्छिताऽभवम् । शोकेन महता तस्मा स्मरन्ती पूर्ववेदनाम् ॥ ४३६ ॥

लब्धसंज्ञा पुनश्चाहं जाता गद्गदकण्ठतः । तदा तामब्रवं धैर्यविहीना मत्कथानकम् ॥ ४३७ ॥

गङ्गातटे सती जाता दैवयोगात्ततः परम् । कौशाम्ब्यामृषभश्रेष्ठिगृहे जन्म ममाभवत् ॥ ४३८ ॥

धनवान् बुद्धिमानासीदिभ्यः स महतां मतः । देवधर्मगुरुश्रद्धाधारको व्यवहारवित् ॥ ४३९ ॥

बालचंद्रकलेवाहं प्रत्यहं वृद्धिगामिनी । मातापित्रोर्मुदं दत्वा चेतांसि समतोषयम् ॥ ४४० ॥

अन्यदा रममाणाऽहं संगता तन्नदीतटे । कल्लोलान् वीक्ष्य वृतान्तमस्मार्षं पूर्वजन्मनः ॥ ४४१ ॥

तथैव रुचिरानद्य तडागतटचारिणः । रथाङ्गान् वीक्ष्य मे जाता पुनः स्नेहस्मृतिर्हृदि ॥ ४४२ ॥

अहो ! सत्स्नेहिनां प्रेमबन्धनं प्रबलं महत् । प्रेमपाशो दुरन्तोऽहि योगिनामपि जायते ॥ ४४३ ॥

इत्थं पूर्वभवस्येदं वृतान्तं स्मृतिगोचरम् । कथं मेऽभूदिति प्रोक्तं मया सारसिके ! स्फुटम् ॥ ४४४ ॥
कथं च मरणं प्राप्ते पत्यौ मे विरहोऽजनि । तत्सर्वं कथितं तुभ्यं संक्षेपात्स्नेहतो मया ॥ ४४५ ॥
चक्रवाकस्य जीवोऽयं प्राग्भवे मानवोऽभवत् । तस्मिन्भवे कृता तेन धर्मस्याराधना दृढा ॥ ४४६ ॥
किञ्चिद्विराधना तस्यामजनि तस्य तद्भवे । तेनैव चक्रवाकत्वं प्राप्तवान्स विधेर्वशात् ॥ ४४७ ॥
आर्तरौद्रातिदुर्ध्यानात्तिर्यङ्नारकयोनिषु । जायन्ते प्राणिनः सर्वे स्वस्वकर्मप्रभावतः ॥ ४४८ ॥
" रौद्रे नारकतां व्रजन्ति मनुजा आर्त्ते च तिर्यग्गतिम् । धर्मे देवगतिं शुभोत्तमफलं शुक्ले च जन्मक्षयम्
तस्माद्व्याधिरुगन्तके हितकरे संसारनिस्तारके, ध्याने शुक्लवरे रजःप्रमथने कुर्यात्प्रयत्नं बुधः " ॥ ४४९ ॥
जानेऽहं मानवं जन्म प्राप्तवत्यस्मि साम्प्रतम् । तथैव सोऽपि संयातो मनुष्यत्वमनुत्तमम् ॥ ४५० ॥
मरणावसरे सूक्ष्म–कषायऋजुभावतः । पुराऽर्हद्–ध्यानयोगेन मनुष्यत्वं प्रपद्यते ॥ ४५१ ॥
येतु प्रकृत्याऽणुकषाययुक्ता दानादताःसंयमशीलशून्याः । गुणैर्युता मध्यममार्गभाजो बध्नन्ति जीवा मनुजायुरेते ॥ ४५२ ॥
भवान्तरगतिं लोके विदन्ति ज्ञानिपुङ्गवाः । पशुपक्षिनरादीनां कर्मणां विषमा गतिः ॥ ४५३ ॥
किन्तु मज्जीविततरयैव विहितः शपथस्त्वया । तस्मान्मत्स्वामिनं यावन्न लभे पूर्वजन्मनः ॥ ४५४ ॥
तावद्वार्ता मदीयेयं गोपनीया प्रयत्नतः । यदा मे कामनासिद्धिस्तदा शान्तिर्भविष्यति ॥ ४५५ ॥
आसन्नहायनान्मातापितरौ वञ्चयाम्यहम् । वितथाऽऽशासमापन्ना भर्तृसंगमवाञ्छया ॥ ४५६ ॥

यदि मद्वाञ्छितं नैव सेत्स्यति चेदुपायतः । एकोऽवलम्बभूतो मे हृदयक्लेशनाशनः ॥ ४५७ ॥

जिनेश्वरेण यः प्रोक्तो जगदुद्धारहेतवे । देहिनां सार्थवाहोऽस्ति मार्गः सैव सुखावहः ॥ ४५८ ॥

" दहति मदनवह्निर्मानसं तावदेव, भ्रमयति तनुभाजां कुग्रहस्तावदेव ।
छलयति गुरुतृष्णा राक्षसी तावदेव, स्फुरति हृदि जिनोक्तो वाक्यमन्त्रो न यावत् ॥ ॥ ४५९ ॥

तन्मार्गं साधितुं साध्वी भविष्याम्येव निश्चितम् । यतः सारतरो मार्गो जिनेन्द्रेण निरूपितः ॥ ४६० ॥

सदा संसारिणां पीडा जायन्ते विरहोद्भवाः । ता यतो विनिवर्तन्ते तन्मार्गगमनोत्सुका ॥ ४६१ ॥

भवदुःखकरं जन्म मरणक्लेशमुत्कटम् । त्यक्त्वाऽनन्तसुखं प्राप्तुं यतिष्ये जिनदीक्षिता ॥ ४६२ ॥

संसारोऽयं विचित्रोऽस्ति भूरिदुःखाकरोऽखिलः । आपातरमणीयो हि दुरन्तपरिणामकः ॥ ४६३ ॥

के संसारसुखाऽऽसक्ता मोक्षसौधं समाश्रिताः । वैराग्यरङ्गरक्तो हि शिवमार्गमनुव्रजेत् ॥ ४६४ ॥

संसारसागरं तर्तुं वीतरागप्रदर्शितः । पोतायते धर्मः एव शुभः शाश्वतः शर्मदः ॥ ४६५ ॥

अतिस्नेहान्मया सख्यै विश्वासेन निवेदितम् । सकलं निजवृत्तान्तं मूलादारभ्य दुःसहम् ॥ ४६६ ॥

सारसिका विशुद्धात्मा मयि स्नेहेन वत्सला । विलापं कुर्वती वक्तुमारेभेऽश्रुमुखाम्बुजा ॥ ४६७ ॥

रे ! रे ! सखि ! वियोगस्य भर्तुस्ते दुःखदायिनी । श्रोतव्या हा ! ममाप्यासीद्वार्ता दुर्भाग्ययोगतः ॥ ४६८ ॥

कृतकर्मविपाकोऽत्र फलानि विषमाण्यहोः । प्रसूते प्राणिनां नष्टचेतसां जननान्तरे ॥ ४६९ ॥

भगिनि ! स्फुरितोदन्ते ! धैर्यं धेहि विशेषतः । त्वयि धर्ममनीषायां देवस्तुष्टो भविष्यति ॥ ४७० ॥
प्रसन्ने देवते स्वामिदर्शनं ते भविष्यति । दुर्लभं किं मनुष्याणां धर्मध्यानविधायिनाम् ॥ ४७१ ॥
वचांसि सान्त्वनस्येवं कथयित्वा मदन्तिके । सारसिका प्रयत्नेन शुचमत्याजयन्मम ॥ ४७२ ॥
ततोजलं समानीय प्रमार्ज्य लोचनाश्रु सा । मृदुवाक्यप्रयोगेणाऽकरोन्मां स्वस्थमानसाम् ॥ ४७३ ॥
पश्चादहं तया सख्या समेता कदलीगृहात् । निसृत्य प्राप मन्मातुरन्तिकं श्रितयोषितः ॥ ४७४ ॥
कासारस्य तटे शुद्धे संस्थिता जननी मम । व्यवस्थामकरोच्छ्रेष्ठां स्नानाय सर्वयोषिताम् ॥ ४७५ ॥
तत्समीपस्थिताया मे लोहिते लोचने मुखम् । विच्छायश्च विलोक्याऽऽशु साऽवदद् व्याकुलस्वरा ॥ ४७६ ॥
किमिदं पुत्रि ते जातमुद्यानानन्दमेलने । किं दुःखं तव चित्तेऽस्ति म्लानमालासमं मुखम् ॥ ४७७ ॥
विषादेन विनिष्क्रामदश्रुक्लिन्ने विलोचने । मार्जयन्ती पुनश्चाहमब्रवं मातरं प्रति ॥ ४७८ ॥
मातर्मन्मस्तकं दुःखात् पीड्यते किं करोम्यहम् । माता मामवदच्छीघ्रं पुत्रि ! याहि गृहं प्रति ॥ ४७९ ॥
आगच्छामि त्वया सार्द्धमहमप्यात्मजे शुभे ! । मद्गृहस्य रमा रम्या कथमेकाकिनी व्रजेः ॥ ४८० ॥
मयि स्नेहवशात्तूर्णं त्यक्त्वा योषाकदम्बकम् । गृहं गन्तुं समारेभे विलम्बेऽनिष्टशंकिनी ॥ ४८१ ॥
सा मन्दस्वरतोऽव्रोचद्वनितामण्डलं निजम् । स्नात भुङ्क्त यथेष्टञ्च गृह्णीत सुमसौरभम् ॥ ४८२ ॥
सर्वमुद्यानिकाकार्यं समाप्यानन्दपूर्वकम् । समागच्छत सर्वेण परिवारेण संयुताः ॥ ४८३ ॥

किञ्चिदावश्यकं कार्यमागतं दैवयोगतः । तस्मादिदानीं गच्छामि गृहं पुत्रीसमन्विता ॥ ४८४ ॥
एवमुक्त्वा तयाऽऽनन्दः सकलोऽत्यज्यत क्षणात् । चिन्तातुरा न जानन्ति सुखमिन्द्रियगोचरम् ॥ ४८५ ॥
अर्थातुराणां न सुहृन्न बन्धु, कामातुराणां न भयं न लज्जा । चिन्तातुराणां न सुखं न निद्रा, क्षुधातुराणां न वपुर्न तेजः ४८६
परन्तु प्रमदाः सर्वाः स्वस्वकर्मणि योजिताः । आनन्दाय तया तासां मद्वार्ता न प्रकाशिता ॥ ४८७ ॥
रक्षकान् किंकरांश्चैव कञ्चुकिनोऽवरोधगान् । स्वस्वकर्मणि संयोज्य स्वल्पस्वजनसंयुता ॥ ४८८ ॥
कियद्दाससमेता सा मां समादाय सत्वरम् । समागमभिरुत्साहा जननी स्वीयपत्तनम् ॥ ४८९ ॥
गृहमागत्य मद्वस्त्राऽलंकारांस्त्वरितं सखी । आदायाऽस्थापयत् पेटामध्ये वेदनयाऽर्दिता ॥ ४९० ॥
ततोऽहं विमनीभूय पर्यङ्के वस्त्रमंडिते । गृहोचितानि वासांसि परिधायाऽस्वपं स्वतः ॥ ४९१ ॥
मदीयजननी प्राह जनकं भृशदुःखिता । अस्मत्सुतां शिरःशूलां गृहीत्वाऽहं समागता ॥ ४९२ ॥
पीड्यते मस्तकं तस्याः, तस्मान्निर्वातधामनि । रक्षितव्याऽधुना सा तु, तेन शान्तिर्भविष्यति ॥ ४९३ ॥
सप्तपर्णतरुर्दृष्टः प्रफुल्लकुसुमो मया । प्रयाताऽहमितो यस्मै तन्मे संपूर्णतामगात् ॥ ४९४ ॥
नारीगणोऽस्तु खिन्नः सन्तुत्सवाद्विरमेदिति । अनिवेद्याऽऽगताहं द्राक् जाताऽस्मि व्यथिता भृशम् ॥ ४९५ ॥
निशम्य वचनं मात्रा गदितं जनको मम । विषण्णमानसो जज्ञे, जातचिन्तो विशेषतः ॥ ४९६ ॥
सुतेभ्योऽपि यतः स्नेहो द्रढीयान् मय्यवर्तत । अभूदभिन्नचित्तोऽपि दुहितृवत्सलो हि सः ॥ ४९७ ॥



पूर्वजन्म—वृत्तान्तम्

विशुद्धवंशसंजातं दक्षमेकं भिषग्वरम् । प्रसिद्धमाह्वयामास तातो मे रोगशान्तये ॥ ४९८ ॥
शस्त्रवित्सोऽप्यभूद्वैद्यो लघुहस्तः शुभक्रियः । शास्त्रविद्याविदां मुख्यश्चाभवन्निखिलाऽऽर्तिहा ॥ ४९९ ॥
रोगं परीक्षितुं तावदपनेतुं च वाञ्छया । तेन मत्सन्मुखं स्थित्वा पृष्टाऽहं रोगकारणम् ॥ ५०० ॥
स्वसस्ते ज्वरतापेन किं वा मस्तकपीडया । शरीरमद्य सञ्जातं शिथिलं वद मे स्फुटम् ॥ ५०१ ॥
यतस्तदुपचाराय प्रयतेऽहं विलम्बनम् । व्याधिव्युच्छेदने नैव विधेयं कुशलैर्नरैः ॥ ५०२ ॥
प्रातस्त्वयाद्य किं भुक्तं तच्चाजीर्यत सर्वथा । निशायां ते समायाता निद्रा सम्यक् सुखावहा ? ॥ ५०३ ॥
मौनं कृत्वा स्थिताऽहं तु सारसिका तदुत्तरम् । प्रादात् प्राभातिकं भोज्यमुद्यानगमनं च यत् ॥ ५०४ ॥
पूर्वजन्मानुभूतं मद् वृत्तान्तमन्तरेण सा । भिषजमवदत्सर्वं दक्षा समयवेदिनी ॥ ५०५ ॥
प्रश्नाननेकधा पृष्ट्वा वैद्यराजोऽवदन्मम । पितरौ दुःखदावाग्निज्वालाज्वलितमानसौ ॥ ५०६ ॥
दुहिता दृश्यते नूनं रुजाऽऽक्रान्तकलेवरा । परमत्र क्षतिर्नास्ति चिन्ता कार्या न सर्वथा ॥ ५०७ ॥
पञ्चविंशतिरुद्दिष्टा ज्वरास्तद्भेद उच्यते । पृथग्दोषैस्तथा द्वन्द्वभेदेन विविधः स्मृतः ॥ ५०८ ॥
एकश्च सन्निपातेन तद्भेदा बहवः स्मृताः । प्रायशः सन्निपातेन पञ्चस्युर्विषमज्वराः ॥ ५०९ ॥
सन्ततः सततश्चैव अन्येद्युष्कस्तृतीयकः । चातुर्थिकश्च पञ्चैते कीर्तिता, विषमज्वराः ॥ ५१० ॥
तथाऽऽगन्तुज्वरोऽप्येकस्त्रयोदशविधो मतः । अभिचारग्रहावेशशापैरागन्तुकस्त्रिधा ॥ ५११ ॥

श्रमाच्छेदात्क्षताद्दाहाच्चतुर्धाऽघातकज्वरः । कामाद् भीतेः शुचो रोषाद्विषादौषधगन्धतः ॥ ५१२ ॥

अभिषङ्गज्वराः षट् स्युरेवं ज्वरविनिश्चयः । भवन्ति विविधा भेदा व्याख्यास्यन्ति चिकित्सकाः ॥ ५१३ ॥

भोजनान्तरं सद्यःसमायाति ज्वरो यदि । स्नेहो हेतुर्भवेत्तत्र, कफः सैव निगद्यते ॥ ५१४ ॥

यदि पाकक्रियाकाले ज्वरार्तिरुद्भवेत्तदा । तद्धेतुरन्य एवाऽस्ति, तत्पित्तमिति कथ्यते ॥ ५१५ ॥

वचनानन्तरं यर्हि ज्वरः प्रादुर्भवेत्तदा । स वातहेतुकोऽपि स्यात् त्रिधाऽयं परिकीर्तितः ॥ ५१६ ॥

यद्येकीभूतमत्युग्रमिदं हेतुत्रिकं नृणाम् । तदाऽनेकान्महारोगान् जनयत्यचिरेण वै ॥ ५१७ ॥

दोषत्रये तथाभूते द्वित्राणि लक्षणानि च । दृश्यन्ते रुग्णदेहेषु सन्निपात इति स्मृतः ॥ ५१८ ॥

ज्वरभेदस्तथा यस्त्वागन्तुक इत्युदीर्यते । कामश्रमादितद्भेदा दोषत्र्याकोपकारकाः ॥ ५१९ ॥

"कामजे चित्तविभ्रंशस्तंद्राऽलस्यमभोजनम् । हृदये वेदना चास्य गात्रञ्च परिशुष्यति ॥ ५२० ॥

खेदो यष्टिप्रतोदादिप्रहारेणाऽस्त्रघाततः । तरुपातादि हेतोश्च प्रादुर्भवति देहिनाम् ॥ ५२१ ॥

युष्मत्पुत्र्यां ज्वरस्यैवंविधानि लक्षणानि च । विनिर्णयाय नो सन्ति विगताऽऽधिर्भवाऽधुना ॥ ५२२ ॥

निरामया सुता नूनम् शकटाघातदुःखिता । आरामे भ्रमणाच्छ्रान्ता तेन मन्देयमीक्ष्यते ॥ ५२३ ॥

तस्माच्च ज्वरितेवासौ दृश्यते मन्दचेष्टिता । श्रम एवास्ति तद्धेतुः कारणं नान्यदिष्यते ॥ ५२४ ॥

कदाचिन्मानसी काऽपि घटेताऽत्र व्यथा किल । समुत्पद्येत सा जाने केनचिच्छोकहेतुना ॥ ५२५ ॥

मां परीक्ष्य भिषग्वर्यो निदानं सत्यमूचिवान् । वञ्चनाविमुखा नैव भाषन्ते शास्त्रिणोऽनृतम् ॥ ५२६ ॥
सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामश्च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ ५२७ ॥
वैद्यो यदोत्थितो गन्तुं तदा तन्मानहेतवे । प्रासादद्वारपर्यन्तं मम तातस्तमन्वगात् ॥ ५२८ ॥
अपराह्णे जनन्या मे विहितो भोजनाऽऽग्रहः । शोकार्त्तया मया किञ्चिद्भुक्तं भोज्यमनिच्छया ॥ ५२९ ॥
तस्मिन्नेव क्षणे नारीवृन्दमुद्यानसङ्गतम् । आजगाम प्रमोदाढ्यं मिथो वार्त्तापरायणम् ॥ ५३० ॥
स्नानेनोद्यानिकायां च लब्धाऽऽनन्दस्य वर्णनम् । कर्तुं प्रारभत प्रेम्णा वनितामण्डलं तदा ॥ ५३१ ॥
रात्रौ शय्यागताया मे लुठन्त्याश्चिन्तया भृशम् । विभावरी सुदीर्घाऽभूद्वियुक्तानां कुतः सुखम् ? ॥ ५३२ ॥
प्रातर्विलोक्य मां पूर्वदिने ये काममोहिताः । तदीयाः पितरः प्रापुर्याच्ञार्थं पितुरन्तिकम् ॥ ५३३ ॥
यद्यप्येते धनाध्यक्षाः कीर्त्तिमन्तश्च भावुकाः । परं तेषां मनोवाञ्छा पित्रा मे विफलीकृता ॥ ५३४ ॥
यतस्तेषां महेभ्यानां नैतिकी धार्मिकी स्थितिः । न व्यलोक्यत तातेन विचारचञ्चु चेतसा ॥ ५३५ ॥
ततो विनाशिताऽऽशानां तेषां नानाविधा गिरः । निशम्य प्राग्भवीया मे स्वरूपगुणवादिनीः ॥ ५३६ ॥
स्मृतिर्विस्फुरिता सद्यो नेत्राभ्यामश्रुसन्ततिः । निःसृत्य निर्भराऽऽक्षार्षीत् मलिनं मुखपङ्कजम् ॥ ५३७ ॥
पूर्वकर्मविपाकेन स्मृतिसिन्धौ यथा यथा । न्यमज्जं भक्तपानादि तथा संत्यक्तवत्यहम् ॥ ५३८ ॥
केवलं बन्धुवर्गस्य तुष्टये पीडिताऽप्यहम् । किञ्चिद्भोज्यादिकं कर्तुमैच्छं च वस्त्रधारणम् ॥ ५३९ ॥

यदि जीवितकल्लोला न गच्छेयुर्ममाऽध्वनि । तर्हि मन्मानसं तेषु कथं स्थिरतरं भवेत् ॥ ५४० ॥
सप्तच्छदसुगन्धस्य तरङ्गो बलवान् पुनः । उद्बोधयेन्मम स्नेहं प्रथमं सुखदोऽपि सन् ॥ ५४१ ॥
अधुना शरवत्तीव्रां नैव कुर्यात्कथं व्यथाम् ? मृदुपुष्पचयोद्भेदे किं सूच्याः स्याद्विलम्बनम् ? ॥ ५४२ ॥
रश्मयः शशिनः कामशरा इव भवन्ति चेत् । मद्वक्षसि स्थिरीभूय कथं निद्रासुखं मम ॥ ५४३ ॥
स्रवेच्चेदमृतं पुष्पात् शान्तिदा वृष्टिरापतेत् । प्रभाते च हिमोत्पत्तिस्तदङ्गारसमं मम ॥ ५४४ ॥
यदन्यत् सुखदं लोके तत्सर्वं मम दुःखदम् । वल्लभेन विनैतर्हि वक्तव्यं किमतोऽधिकम् ॥ ५४५ ॥
गुरूणामुपदेशेन मन्मनोरथसिद्धये । तपश्चर्यामहं तीव्रां प्रारभेऽङ्गार्यनिश्चया ॥ ५४६ ॥
अष्टोत्तरशताऽऽचाम्लविधानेन जिनेश्वरैः । वाञ्छितार्थप्रदा सेयं प्रोक्ता कल्मषहारिणी ॥ ५४७ ॥
व्रतमेतद्विधातुं मे पितृभ्यां सम्मतिः शुभा । प्रदत्ता धर्महेतुत्वे को विरुद्धमतिर्भवेत् ॥ ५४८ ॥
यस्मादाचरिते तादृग्व्रते दुर्भाग्यतानृणाम् । विनश्यति सदा श्लाघ्यं सुभगत्वं च लभ्यते ॥ ५४९ ॥
मदीयकामनायास्तु स्मृतिर्नासीत्तयोर्हृदि । गुप्तवृत्तान्तमन्येन केनापि ज्ञायते न वै ॥ ५५० ॥
प्रत्यहं क्षीणदेहाऽहमभवं निजचिन्तया । ताभ्यामेवं कथं वृत्तिर्ज्ञायते मन्मनोगता ॥ ५५१ ॥
आन्तरिकव्यथार्त्ताया आकस्मिकविचारणा । दैवयोगात्कामुकायाः प्रास्फुरन्मम चेतसि ॥ ५५२ ॥
तामनुसृत्य चित्राणि कतिचित्सावधानया । पटेषु लिखितान्याशु चित्रकर्मकलाविदा ॥ ५५३ ॥

प्राग्जन्मनि मया भर्त्रा साकं योऽनुभवः कृतः । तं प्रकाशयितुं चित्राण्यङ्कितानि पटोपरि ॥ ५५४ ॥
कथं भर्त्रा सहावात्सं कथं च व्यचरं वने । कथं शरेण विद्धः स कथं व्याधेन दुर्धिया ॥ ५५५ ॥
विहितश्चाग्निसंस्कारो जाताऽहं च सती कुतः । समग्रमङ्कितं दृश्यमद्भुतं तत्पटोपरि ॥ ५५६ ॥
गङ्गा तदीयकल्लोलाः कासारश्चाऽतिसुन्दरः । तत्र संचारिविहगाश्चक्रवाका विशेषतः ॥ ५५७ ॥
कार्यज्ञया मया स्पष्टं चित्रिता सकला अपि । गजेन्द्रमनुधावँश्च व्याधश्चापधरस्तथा ॥ ५५८ ॥
विकसत्पङ्कजं वारिसंभृतं च सरोवरम् । विविधर्तुसमुत्पन्नकुसुमोल्लासितैर्वनम् ॥ ५५९ ॥
वृक्षौघैर्वासितं सम्यक् चित्रितं च मयाऽऽदरात् । विचित्रचित्रमालानां स्थापनैकत्र कल्पिता ॥ ५६० ॥
तत्सम्मुखमुपस्थाय मन्मनोमन्दिराधिपम् । चक्रवाकं चिरं ध्यायन्त्येकदृष्ट्या व्यलोकयम् ॥ ५६१ ॥
कार्तिकी पूर्णिमा तावत् संप्राप्ताऽऽनन्ददायिनी । कौमुदीपर्व सा लोके मन्यते मोदवासरः ॥ ५६२ ॥

॥ पर्वप्रशस्तिः ॥

शुभोत्सवेऽर्हत्प्रतिमाऽवलोकने पूजाविधौ सेवनभक्तिभावे ।
सुपात्रदानेऽतिथिसत्कृतौ चाऽखिलं दिनं याति हि शुद्धकार्ये ॥ ५६३ ॥

मित्राणि स्वजनाश्च मोदकलिता नैकप्रकारोचितान् । यच्छन्त्येव महोपहारकगणान् प्रेम्णो मिथो हेतवे ।
आशीर्वादमहाध्वनिर्गुरुमुखात्संश्रूयते भावतः, सर्वाऽऽनन्दमयः सुखं स दिवसः क्षेमप्रदो जायते ॥ ५६४ ॥

संसारदुःखस्य विनाशहेतुः संपत्तिसन्तानविधानदक्षः । सद्धर्मलाभः श्रुतिगोचरो भवेद्भव्यात्मना सद्गुरुसन्निधाने ॥ ५६५ ॥

पर्वोत्सवं नूतनमाप्रपद्य विधेयमावश्यकमेव सर्वैः । धर्मात्मभिर्धर्ममखण्डबुद्ध्या कल्याणसंपत्तिविधानदक्षम् ।

धर्मः स एषोऽत्र जिनोपदिष्टो दयाप्रधानोऽनुपकारवाञ्छया । सुपर्वकाले यदि सैव साध्यते ततो न किं तेन
महात्मना कृतम् ॥ ५६६ ॥

गृहेषु सर्वत्र समङ्गलानि गीतानि गायन्ति वराङ्गना मुदा । आनन्दसन्दोहकराणि भूरि हृद्येन रागेण रसप्रदानि ॥५६७॥

देहिनां सर्वदा भव्यं नव्यं प्रीतिप्रदं भवेत् । अहो स्वभाव एषोऽत्र सर्वेषां हि नवं नवम् ॥ ५६८ ॥

आतोद्यवृन्दं विविधस्वरं शुभ-मानन्दयत्यङ्गिगणं पुरःस्थितम् ।
विशेषतः सुन्दरता विराजते नादे पशूनाञ्च विहङ्गमानाम् ॥ ५६९ ॥

इदन्तनीयः खलुकौमुदीभरो महोत्सवो मोदविधायको जने । जातोऽस्ति नानासुखहेतुभूतः सर्वत्रकाले जनतोपदायी॥५७०॥

अद्यैवाऽस्मत्सदनमनघं नूतनं जातमस्ति, निःशेषाणामतुलमचलं प्रेमचित्ते बभूव ।
पर्वोत्साहो मनसि वचने नव्यभावं तनोति, वस्त्रे भक्ते परहितविधौ कल्पनायाञ्च शुद्धौ ॥ ५७१ ॥

अद्यैव मे मानसमद्वितीयप्रमोदभाग्जातमतीतकाले । वियोगखिन्नं स्मृतिगोचरस्य शान्तं गुरूणां वचनेन सद्य ॥ ५७२ ॥

दुःखालिशान्तिं प्रविधातुमिच्छन् शक्नोति नो यत्नविशेषतो ना । नवीनवस्तुग्रथितं मनो यदा तदैव शान्तिं
समुपैति दुःखम् ॥ ५७३ ॥

सद्वस्तुसङ्गाल्लभते सुशर्म दुष्टप्रसङ्गात्समुपैति कष्टम् । ततः सदालम्बनमाविधेयं सतां जनानां शुभशर्महेतुः ॥ ५७४ ॥
सङ्गीभूय जनैस्तस्मिन्पर्वणि मुदिताशयैः । महोत्सवपरैर्मान्यं क्रूरकर्मपराङ्मुखैः ॥ ५७५ ॥
व्यापारो हिंसकानाञ्च तस्मिन्नह्नि निषिध्यते । दुःखितानाञ्च विश्रान्तिर्जायते भारवाहिनाम् ॥ ५७६ ॥
धर्मिष्ठा मानवा दानतपःपुण्यजपादिकम् । विधाय सफलं जन्म यतन्ते कर्तुमादरात् ॥ ५७७ ॥
मयाऽपि वासरे तस्मिन् पितृभ्यां सह शर्मदः । उपवासः कृतः सायं चातुर्मासिकमुत्तमम् ॥ ५७८ ॥
प्रतिक्रमणमाराध्य सर्वे जीवा क्षमापिताः । ज्ञाताऽज्ञातापराधानां क्षतये शुद्धचेतसा ॥ ५७९ ॥
प्रभाते चोपवासस्य पारणा विहिता मया । ततो हर्म्यतलारूढा पुरशोभां व्यलोकयम् ॥ ५८० ॥
शिल्पिभिश्च कलादक्षैश्चित्रितैः स्तम्भसञ्चयैः । प्रासादोऽभ्रंलिहोऽराजन्मत्तातस्य मनोरमः ॥ ५८१ ॥
प्रधानद्वारशिखरे वारिभिः पूरिता घटाः । सौवर्णाः स्थापिता दानघोषणामिव कुर्वते ॥ ५८२ ॥
तेनैवं ज्ञातवाँल्लोको हर्म्येऽस्मिन् दानतत्परः । प्रत्यहं विपुलं वित्तं ददात्यर्थिजनाय वै ॥ ५८३ ॥
तत्रैव च दिनेऽस्माकं गृहे दानमनल्पकम् । जातं सुवर्णगोभूमिरूप्यशय्यासनादिकम् ॥ ५८४ ॥
यद्यस्यापेक्षितं वस्तु तत्तस्मै दीयते स्म वै । यस्मै कस्मै कदा क्वापि दानं दत्तं न निष्फलम् ॥ ५८५ ॥
नगरे यानि चैत्यानि जिनेन्द्राणां विभान्ति च । तानि संभूषितान्येव विशुद्धभावभक्तितः ॥ ५८६ ॥
व्रतिभ्यश्च यथायोग्यं वस्त्रपात्रसुभोजनम् । शय्याऽऽसनादिकं वस्तु प्रदत्तं भावपूर्वकम् ॥ ५८७ ॥

मन्दिरेषु जिनेन्द्राणां मूर्त्तीनां सन्निधौ तथा । सुवर्णमणिरत्नानामुपदा विहिताऽऽदरात् ॥ ५८८ ॥
दानं सदा फलत्येव सद्दानस्य फलं शुभम् । असद्दानं तथा लोके फलं दत्तेऽशुभं सदा ॥ ५८९ ॥
तपस्विज्ञानिसाधुभ्यः प्रदानं फलमुत्तमम् । प्रदत्ते तेन दुःखानि नश्यन्त्यैहिकजन्मनः ॥ ५९० ॥
" जैने धर्मे प्रथितमनसां शुद्धचारित्रभाजां, सत्साधूनां विहिततपसां पात्रदानं तदेव ।
शुद्धाऽऽहारप्रवितरणकं यच्छुभोद्भूतभावात्, तत्त्वज्ञैस्तच्छुभफलकरं दानमावेदितं हि " ॥ ५९१ ॥
पात्रे यच्छति यो नित्यं निजशक्त्या सुभक्तितः । सौख्यानां भाजनं स स्याद्यथा धन्योऽभवत्पुरा " ॥ ५९२ ॥
" उत्तमपत्तं साहू मज्झिमपत्तं सुसावया भणिया । अविरयसम्मदिट्ठी जहन्नपत्तं मुणेयव्वम् ॥ ५९३ ॥
धर्मध्यानव्रतसमितिभृत्संयतश्चारुपात्रं, व्यावृत्तात्माऽत्र सहनरतः श्रावको मध्यमं तु ।
सम्यग्दृष्टिर्व्रतविरहितः श्रद्धधानः, स्याज्जघन्य-मेवं । त्रेधा जिनपतिमते पात्रमाहुः श्रुतज्ञाः ॥ ५९४ ॥
केसिं च होइ वित्तं केसिंपि उभयमन्नेसिं । चित्तं वित्तञ्चपत्तञ्च तिन्नि पुन्नेहिं लब्भंति " ॥ ५९५ ॥
देयं स्तोकादपि स्तोकं नव्येऽपेक्ष्यो महोदयः । इच्छानुसारिणी शक्तिः कदा कस्य भविष्यति ॥ ५९६ ॥
दीनादिभ्योऽधिकः कश्चिन्मानवेभ्यो हि धार्मिकः । दानं करोति नो व्यर्थं जायते क्वापि भूतले ॥ ५९७ ॥
दानस्य पञ्चैव विभूषणानि तथैव तद्दूषणपञ्चकञ्च । सभूषणन्तत्सुगतिं प्रदत्ते सदूषणं दुर्गतिमातनोति ॥ ५९८ ॥
" आनन्दाश्रूणि रोमाञ्चो बहुमानं प्रियंवचः । तथाऽनुमोदना पात्रे, दानभूषणपञ्चकम् ॥ ५९९ ॥

अनादरो विलम्बश्च वैमुख्यं विप्रियं वच । पश्चात्तापश्च दातुः स्याद्दानदूषणपञ्चकम् ” ॥ ५०० ॥
अमुत्र सज्जनानाञ्च गृहे पुण्यवतां शुभे । जन्म संजायते नूनं शुद्धधर्मप्रभावतः ॥ ६०१ ॥
यस्मादात्मोन्नतिर्भव्या साध्यते विमलात्मभिः । जन्ममानवमासाद्य सैव मुख्यं फलं स्मृतम् ॥ ६०२ ॥
सतां दानादिसेवातो निर्वाणपदवी शुभा । सुलभा जायते नृणां साधवो हि सुखप्रदाः ॥ ६०३ ॥
चौर्यकर्मविधायिभ्योस्तत्परेभ्यस्तथाऽनृते । परदाररतेभ्यश्च शत्रुभ्योऽपि महीपतेः ॥ ६०४ ॥
दाने कृते ध्रुवं किञ्चित्फलं दुष्टं प्रजायते । अतो विवेकतो दानं दातव्यं शुभमिच्छता ॥ ६०५ ॥
ब्राह्मणेभ्योऽन्यभिक्षुभ्योऽप्युदारमनसा भृशम् । दानं दत्तं फलत्येव निष्फलन्नैव जायते ॥ ६०६ ॥
“ पात्रे मुक्तिनिबन्धनं तदितरे प्रोद्यद्दयाख्यायकं, मित्रे प्रीतिविवर्धनं रिपुजने वैरापहारक्षमम् ।
भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं, भट्टादौ च यशस्करं वितरणं न क्वाप्यहो निष्फलम् ” ॥ ६०७ ॥
याचका धर्मिणं नित्यं श्लाघन्ते तेन तद्यशः । कीर्तिश्च जायते लोकेऽनुकम्पादानमुत्तमम् ॥ ६०८ ॥
तस्मिन्नपि फलं दाने सम्यक् संप्राप्यते जनैः । ज्ञात्वेति दानहीनैश्च न भाव्यं हि कदाचन ॥ ६०९ ॥
गृहस्थानां हि भव्यानां सदा द्वाराणि भूतले । उद्घाटितानि सन्त्येव भिक्षुकाऽतिथिहेतवे ॥ ६१० ॥
यस्य कस्यापि दानेन सम्पत्तिःपरिवर्द्धते । दानं निरर्थकं नैव जायते भावतः कृतम् ॥ ६११ ॥
सत्कुर्वन्त्यतिथीनत्र ये जना धर्मसाधनाः । तेषां सम्पत्तयः प्रीताः वर्द्धन्ते कुलकीर्तयः ॥ ६१२ ॥

जिनेश्वरोदितं दानं प्राधान्यं भजते ध्रुवम् । धर्मकल्पद्रुमस्यैषा मुख्यशाखा प्रकीर्तिता ॥ ६१३ ॥
तच्च सद्वृत्तिदं प्रोक्तं सर्वदुःखोपशामकम् । यथाविधि यथाशक्ति विधेयं समचेतसा ॥ ६१४ ॥
पात्रे शुद्धात्मने वित्तं, दत्तं स्वल्पमपि श्रिये । दत्ते स्निग्धानि दुग्धानि, यद्गवां चारितं तृणम् ॥ ६१५ ॥
अस्माकं कौमुदीपर्व धनव्ययकृतेऽभवत् । दानाय शुद्धिहेतोश्च धर्माराधनहेतवे ॥ ६१६ ॥
सायंकाले मया शोभां नगरस्य निरीक्षितुम् । दृष्टिः प्रसारिता दुःखसंमिश्रा दूरगामिनी ॥ ६१७ ॥
सहस्ररश्मिर्भगवान् स्वकीयकिरणावलीम् । संहृत्याऽदृश्यतां प्राप निमज्ज्य सागराम्बुनि ॥ ६१८ ॥
उषादेव्या समं नूनं चिरकालनिवासतः । व्याकुलमानसो जज्ञे विच्छायवदनेऽपि च ॥ ६१९ ॥
सायंकालमहिष्याश्च सन्ध्यादेव्याः समीपगः । निश्चिन्तमानसस्तस्थौ तदीयशान्तिपत्तने ॥ ६२० ॥
जना इत्थं वदन्त्येके दीर्घाऽऽकाशप्रयाणतः । श्रमेण रक्तसौवर्णरश्मिमालाविभूषितः ॥ ६२१ ॥
वीर इवाभवद्भानुर्भूमिदेवीक्रमाऽम्बुजे । लीनस्तमिस्रया जीवास्तमसाऽऽवेष्टितास्ततः ॥ ६२२ ॥
यदस्माकं गृहस्यासीन्मुख्यद्वारस्य शोभनम् । अङ्गणं राजमार्गस्याप्यभूद्भूषणमद्भुतम् ॥ ६२३ ॥
तत्रोत्तमोपकरणवेष्टितालेख्यभालिकाम् । लोकान् दर्शयितुं सर्वां मुक्तवत्यहमादरात् ॥ ६२४ ॥
तासां संरक्षणायैव मद्ऽऽदुःखसुखभागिनी । सखी मे वल्लभा सार–सिका नियोजिता मया ॥ ६२५ ॥
मनुष्यभवमापन्नः स्वामी मे पूर्वजन्मनः । तच्छुद्धयर्थं मया युक्ती रचितेयं सुगोपिता ॥ ६२६ ॥

सर्वस्मिन्स्वजने दक्षा वयस्या बोधिता मया । परीक्षां कर्तुमौचित्यविधानविदुषी वरा ॥ ६२७ ॥

" औचित्यमेकमेकत्र गुणानां कोटिरेकतः । विषायते गुणग्राम औचित्यपरिवर्जितः " ॥ ६२८ ॥

सर्वेषामान्तरं भावं ज्ञातुं त्वमिङ्गितेन वै । वचनोद्गारतश्चैव निपुणाऽसि महामते ! ॥ ६२९ ॥

तस्मात्त्वं शृणु मद्वाक्यं सावधानतया सखि ! । मज्जीवनं सुखीकर्तुं नेतरा विद्यते जने ॥ ६३० ॥

सुखोपभोगकाले हि, मित्राणि स्युरयततः । विपद्गणे तु सम्प्राप्ते मित्रामित्रपरीक्षणम् ॥ ६३१ ॥

निर्व्याजमित्रतायुक्तो ध्रुवमापन्निवारणे । कृतोद्यमो भवेत्प्राणाऽर्पणेनाऽपि न छद्मवान् ॥ ६३२ ॥

स्वस्वकार्ये रता भूमौ लभ्यन्ते बहवो जनाः । स्वकार्यादधिकोयत्नः परकार्ये महीयसाम् ॥ ६३३ ॥

स्वकर्मनिर्माणविधौ प्रयत्नं, कुर्वन्ति ये सन्ति गृहे गृहे ते । परार्थनिर्माणपरायणा ये, सन्तः कियन्तो भुवि तेऽत्र सन्ति ॥ ६३४ ॥

वचने मानसे काये क्रियायामपि सन्ततम् । स्वभावो विद्यते तुल्य उत्तमानां तनुमताम् ॥ ६३५ ॥

अहितं मानसे नित्यं कुर्वाणेऽपि निरन्तरम् । हितमेव वितन्वंति स्वदेहेनोत्तमा नराः ॥ ६३६ ॥

अयं निजः परो वेत्ति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ६३७ ॥

उपकर्तुं प्रियं वक्तुं, कर्तुं स्नेहमकृत्रिमम् । सुजनानां स्वभावोऽयं, केनेन्दु शिशिरीकृतः ॥ ६३८ ॥

यस्मिन्नगरे जातो मद्भर्तापूर्वजन्मनः । अन्यमानववत्सोऽपि भ्रमन्नत्राऽऽगमिष्यति ॥ ६३९ ॥

चित्राण्येतानि सम्प्रेक्ष्य-पाश्चात्यभवमावयोः । स्मरिष्यति स शुद्धात्मा नूनमेतद्भविष्यति ॥ ६४० ॥

यतो यः सुखदुःखेषु स्नेहवान् स नरश्चिरम् । वियोग्यपि तथाऽऽलेख्यानदृष्ट्वा सर्वं स्मरेत्क्षणात् ॥ ६४१ ॥

हृदयस्थं रहो वृत्तं सद्यः प्रादुर्भवेद् बहिः । दुर्जनस्य भवेद् दृष्टिः क्रूरा मित्रस्य कोमला ॥ ६४२ ॥

" यत्साधूदितमन्त्रगोचरमतिक्रान्तो द्विजिह्वाऽऽननः, क्रुद्धो रक्तविलोचनोऽसिततमो मुञ्चत्यवाच्यो विषम् ।
रौद्रो दृष्टिविषो विभीषितजनो रन्ध्राऽवलोकोदितः, कस्तं दुर्जनपन्नगं कुटिलगं शक्नोति कर्तुं वशम्" ॥ ६४३ ॥

शुद्धा सत्यप्रवक्तुस्तु सुस्थिरा च सदा भवेत् । चञ्चलस्य चला नूनं दयालोश्च दयान्विता ॥ ६४४ ॥

अन्यस्य दुःखमावीक्ष्य सज्जनस्य च चेतसि । दया सञ्जायते सम्यगु-पकारधिया सदा ॥ ६४५ ॥

"वार्द्धेश्चन्द्रः किमिह कुरुते ! नाकिमार्गस्थितोऽपि, वृद्धो वृद्धिं भयति यदयं तस्य हानौ च हानिम् ।
अज्ञातो वा भवति महतां कोऽप्यपूर्वस्वभावो, देहेनापि व्रजति तनुतां येन दृष्ट्वाऽन्यदुःखम् " ॥ ६४६ ॥

एवं विधं पुनः स्वीय-मेव वृत्तं भवेद्यदि । तदात्वत्यधिकं चित्तं विह्वलं जायतेऽङ्गिनः ॥ ६४७ ॥

तस्य वक्षसि संलग्नः शरघात इव व्यथा । भृशं भवति दुर्ध्यानाऽऽ-क्रष्टचित्तस्य देहिनः ॥ ६४८ ॥

वदन्त्येवं जना लोके लब्ध्वा पूर्वभवस्मृतिम् । मानवो दुःखितो भूत्वा मूर्च्छां प्राप्नोति निश्चितम् ॥ ६४९ ॥

तस्मादेतानि चित्राणि वीक्षमाणस्य मत्पतेः । प्राग्भवस्मृतिमात्रेण मूर्च्छाऽवश्यं भविष्यति ॥ ६५० ॥

लब्धसंज्ञस्ततोऽश्रूणि मुञ्चन्स त्वां वदिष्यति । इमानि केन चित्राणि चित्रितानि सुलक्षणे ! ॥ ६५१ ॥

तदा त्वया निश्चयेन ज्ञातव्यः स हि मत्पतिः । मनुष्ययोनिमापन्नो वियुक्तः पूर्वजन्मनः ॥ ६५२ ॥

सावधानतया तस्य वीक्षणीया त्वयाऽऽकृतिः । चेष्टादिकं तथा ज्ञेयं नामस्थानादिकं तथा ॥ ६५३ ॥
प्रभातसमये तच्च सर्वोदन्तं सखि ! त्वया । यथार्थं कथनीयं मे त्वमेव हितकारिणी ॥ ६५४ ॥
तस्य दर्शनमात्रेण पुनर्मे सकलार्त्तयः । विनङ्क्ष्यन्ति तमालिङ्ग्य स्नेहश्च पल्लविष्यति ॥ ६५५ ॥
यदा त्वसौ न लभ्यश्चे-त्साध्वीभूय मयाऽञ्जसा । मोक्षाऽध्वनि विहर्तव्यं सर्वदुःखविनाशके ॥ ६५६ ॥
भर्त्तारमन्तरा मोक्ष-सुखाऽऽश्रामन्तरा तथा । विविधं जायते दुःखं दग्धजीवनयापने ॥ ६५७ ॥

अनन्तदुःखानि भवन्ति संसृतौ, संसारिणो मोहवशं प्रयाताः ।
पुनःपुनर्मृत्युमहाऽसुराऽर्दिताः, व्रजन्ति कष्टान्यतुलानि लोके ॥ ६५८ ॥
भवोदधिं कस्तरितुं समर्थो, वैराग्यनौकाश्रयमन्तरेण ।
तत्राऽपि जैनी विदिताऽस्ति दीक्षा, प्रकीर्तिता केवलिभिः प्रधाना ॥ ६५९ ॥

पत्युः संयोगमिच्छन्त्या मयैवं सा सखी भृशम् । बोधिता प्रहिता चित्रैः समेता प्रियकारिणी ॥ ६६० ॥
सूर्योऽप्यस्तङ्गतस्तावत् सर्वाऽऽवरणकारिणी । निशाऽन्धतमसा व्याप्ता सर्वत्र प्रासरत्ततः ॥ ६६१ ॥
निजधर्मानुसारेण प्राधान्यात्पर्ववासरे । शयनस्य गृहे भूमौ गृहीतव्यो हि पौषधः ॥ ६६२ ॥
तस्यां जागरणं रात्रौ विधातव्यं मनीषिभिः । अक्षयाऽऽनन्दसद्धाम प्रभुध्यानं विशेषतः ॥ ६६३ ॥
विज्ञायैवमहं गत्वा पौषधागारमुत्तमम् । स्वपितृभ्यां सहाऽकार्षं भगवत्स्तुतिवन्दनम् ॥ ६६४ ॥

अहर्निशं कृतं पापं दूरीकर्तुं त्रिधा मया । प्रतिक्रमणमुत्कृष्टं विहितं विधिना ततः ॥ ६६५ ॥
सर्वं नित्यविधिं कृत्वा शयित्वा धरणीतले । स्वस्थेन मनसा निद्रामभजं धर्मभाविता ॥ ६६६ ॥
तत्राऽहं गिरिमारूढा भ्रमन्तीव लताऽन्तरे । स्वप्नं व्यलोकयं पश्चा–ज्जाग्रद्भावं समागता ॥ ६६७ ॥
ततश्च पितरं गत्वा पर्यपृच्छं नतानना । किं फलं जनकैतस्य स्वप्नस्य ब्रूहि साम्प्रतम् ॥ ६६८ ॥
तातोऽपि मां समुद्दिश्या–कथयत्स्वप्नजं फलम् । स्वप्नशास्त्रानुसारेण विद्यतेऽस्य शुभं फलम् ॥ ६६९ ॥
उक्तञ्च–समधातोः प्रशान्तस्य, धार्मिकस्यातिनीरुजः । स्यातां पुंसो जिताक्षस्य स्वप्नौ सत्यौ शुभाशुभौ ॥ ६७० ॥
अनुभूतः श्रुतो दृष्टः प्रकृतेश्च विकारजः । स्वभावतः समुद्भूतश्चिन्तासन्ततिसम्भवः ॥ ६७१ ॥
देवताद्युपदेशोत्थो धर्मकर्मप्रभावजः । पापोद्रेकसमुत्थश्च स्वप्नः स्यान्नवधा नृणाम् ॥ ६७२ ॥
प्रकारैरादिमैः षड्भिरशुभश्च शुभोऽपि च । दृष्टो निरर्थकः स्वप्नः सत्यस्तु त्रिभिरुत्तरैः ॥ ६७३ ॥
सद्भाग्यं ज्ञायते स्वप्नाद्दुर्भाग्यश्च शरीरिणाम् । आनन्दश्च तथा शोकः जीवनं मरणं पुरा ॥ ६७४ ॥
आममांसं व्रणश्चैव रुधिरार्द्रं व्यथाध्वनिः । हस्तपादविभङ्गश्च वह्निज्वाला भयङ्करा ॥ ६७५ ॥
एतानि स्वप्नदृष्टानि जनयन्त्यशुभं फलम् । गजोक्षगिरिहर्म्येषु क्षीरिवृक्षोत्तमेष्वपि ॥ ६७६ ॥
निजात्मानं यदापश्ये–दायतिं लभते शुभाम् । स्वप्ने लङ्घयते योऽब्धिं नदीश्च स न दुःखितः ॥ ६७७ ॥
पुनर्नरादिजातीनां दर्शनं प्रायशः शुभम् । फलं ददाति सुप्तेऽपि स्वप्नशास्त्राऽनुसारतः ॥ ६७८ ॥

नरस्त्रीजातिमद् वस्तु यदि स्वप्ने लभेत ना । तदा निजेप्सितं लाभं प्राप्नोत्येव न संशयः ॥ ६७९ ॥
यदि नश्येच्च तद्वस्तु निजेष्टं स्वप्नवेदिनः । तदाऽवश्यं प्रजायेत हानिर्दुःखविधायिनी ॥ ६८० ॥
यो नरः सत्फलप्रार्थी दुष्फलाच्च बिभेत्यपि । स धर्मं स्वप्नतः कुर्यात् धर्मोदुष्फलनाशकः । ॥ ६८१ ॥
फलानि स्वप्नलभ्यानि फलन्त्यवसरे कदा । स्वप्नस्य समयेनैतज्-ज्ञायते निश्चयाद् बुधैः ॥ ६८२ ॥
रात्रेश्चतुर्षु यामेषु दृष्टः स्वप्नः फलप्रदः । मासैर्द्वादशभिः षड्भिस्त्रिभिरेकेन च क्रमात् ॥ ६८३ ॥
निशान्ते घटिकायुग्मे दशाहात्फलति ध्रुवम् । दृष्टः सूर्योदये स्वप्नः सद्यः फलति निश्चितम् ॥ ६८४ ॥
मालास्वप्नोऽह्नि दृष्टश्च तथाऽऽधिव्याधिपीडितः । मलमूत्रादिपीडोत्थः स्वप्नः सर्वो निरर्थकः ॥ ६८५ ॥
यदि स्वप्नं समायाति प्रथमप्रहरे तदा । षण्मासान्ते फलन्तस्य लभ्यते निद्रितैर्जनैः ॥ ६८६ ॥
मध्यरात्रे यदीक्षेत स्वप्नं निद्रागतो जनः । मासत्रयान्ते जायेत तत्फलं तस्य देहिनः ॥ ६८७ ॥
ब्राह्मे मुहूर्ते यः पश्येत् स्वप्नं निद्रां गतो नरः । तदा सार्द्धैकमासान्ते सफलं लभते ध्रुवम् ॥ ६८८ ॥
प्रभाते च निरीक्षेत स्वप्नं प्राण्यर्द्धनिद्रितः । सद्यः फलति तत्स्वप्नं सत्यमेव न संशयः ॥ ६८९ ॥
स्वस्थे शरीरे स्वप्नानि फलमग्रेऽर्पयन्ति हि । तद्विरुद्धानि तान्येव फलं किञ्चिन्न तन्वते ॥ ६९० ॥
अज्ञातचेतनाशक्तेर्मनोविज्ञानमूलकः । खंडाऽखंडभिदा स्वप्नः, शुभाऽशुभविकाशकः ॥ ६९१ ॥
पर्वतारोहणं स्वप्नं यदि कन्या विलोकते । तर्हि सा लभते स्वेष्टं स्वामिनं सुन्दराकृतिम् ॥ ६९२ ॥

अन्यस्यैतादृशं स्वप्नं यद्यायाति निशामुखे । तदा निजेप्सितं वित्तं प्राप्नोत्येवाश्वयत्नतः ॥ ६९३ ॥
प्रियाङ्गजे ! तवैतेन शुभस्वप्नेन सूचितम् । सप्तवासरमध्ये हि सद्भाग्यं प्रकटिष्यति ॥ ६९४ ॥
मत्पितुरिति वाक्यानि निशम्य मम चेतसि । विचारोऽभूद्दृष्टं मे पत्युर्नान्यत्रवेदिह ॥ ६९५ ॥
मदीयं गुप्तवृत्तान्तं पितृभ्यां गोपितं मया । सारसिकाऽऽगमं तस्मात् प्रतीक्ष्य निशि संस्थिता ॥ ६९६ ॥
पुनः पुनर्विचारं तं कुर्वन्ती जिनपुङ्गवम् । ध्यायन्त्यहं समुत्थाय विष्टराच्छुद्धमानसा ॥ ६९७ ॥
विधाय नैशिकं शुद्धं प्रतिक्रमणमार्हतम् । आवश्यकक्रियाकाण्डं विहितं विधिना मया ॥ ६९८ ॥
सूर्योदयेऽथ सञ्जाते दन्तधावनमाचरम् । पितृभ्यां च वियुज्याहं प्रासादोपरिगा शनैः ॥ ६९९ ॥
प्रासादतलमारुह्य चिन्तितस्वमनोरथा । दिगन्तान्वीक्षमाणाऽहं समयं व्यत्ययापयम् ॥ ७०० ॥
तदन्तिमविभागे च चित्राणि चित्रितान्यहो । मनोहराणि—रत्नादिखचितान्यभवन् खलु ॥ ७०१ ॥
आशाबद्धं शरीरं मे विनुट्यदपि नापतत् । चिन्ताग्रस्तमनुष्याणां केवलाशा हि जीवनम् ॥ ७०२ ॥
अथाऽस्मिन्समये भानुर्भानुभिर्द्योतयन् जगत् । उदयमाससादाशु साक्षी निखिलकर्मणाम् ॥ ७०३ ॥
पलाशपुष्पसंकाशा रश्मयस्तेन भूतले । प्रसारिताः प्रभावन्तो लोहिताश्च परार्थिना ॥ ७०४ ॥
दूरदूरतरं भूमि-मण्डलं केसरद्युति । बभासे भासमानाऽऽमं जन्तुमोदविधायकम् ॥ ७०५ ॥
जगत्प्रबोधयामास सकलं भानुरुच्छ्रितः । प्रकाशं प्राप्य को लोके प्रमादं सेवते जनः ॥ ७०६ ॥

प्रातर्निरीक्ष्य नलिनीदयितं सुताम्रं, वीरं ग्रहाग्रसरमाश्रितपूर्वशैलम्
पद्मौघसंकुचितमात्रकृताऽपराधा,–चन्द्रोऽभिमानधनवानपतत्पयोधौ ॥ ७०७ ॥

निशाकरप्रभाभिश्च गतानि म्लानतां निशि । पङ्कजानि प्रफुल्लानि चकार सकलान्यसौ ॥ ७०८ ॥

सहजसौरभोद्भ्राम्यद्भ्रमरगीतशोभिनी । उदिते तु दिनाधीशे स्मेरा जाता सरोजिनी ॥ ७०९ ॥

निजांशुवेष्टितामप्राचीं चुचुम्बार्कोऽतिरागिणीम् । लज्जयेव ययौ श्यामा क्वापि मीलितलोचना ॥ ७१० ॥

तदैव मोदमापन्ना सारसिकाऽपि सत्वरम् । मदन्तिके समागत्य मामाऽऽश्लिक्षद्धृदा दृढम् ॥ ७११ ॥

ततः साऽऽनन्दसम्फुल्ला स्नेहदृष्ट्या जयप्रदम् । उदन्तं कथयामास मामधीराक्षिपङ्कजाम् ॥ ७१२ ॥

तस्या वचनविस्तारेऽलौकिकी रसभावना । सा श्वसन्ती मुहुर्मोदात् प्रारेभे वाचिकक्रमम् ॥ ७१३ ॥

चिरादृश्यतां प्राप्तः स्वामी तव प्रियस्वसः ! । अधुना सैव जातोऽस्ति मदीयदृष्टिगोचरः ॥ ७१४ ॥

निरभ्रशरदश्चन्द्र इव ( तन्मुखमद्भुतम् ) रम्यं तदाननम् । प्रकाशते बृहत्कान्तिमण्डितं मण्डलान्वितम् ॥ ७१५ ॥

भगिनि ! त्वं भव स्वस्था धैर्यं धेहि निजात्मनि । अचिरात्ते मनोऽभीष्टा कल्पना (सेत्स्यति) ध्रुवम् । फलमाप्स्यति ॥७१६॥

इत्थन्तस्या मुखाद्वाक्यं निशम्याऽमृतसोदरम् । सुखवारिमुचो वृष्ट्या बभूवाऽहं परिप्लुता ॥ ७१७ ॥

अप्रमेयप्रमोदेन सारसिकां प्रियङ्करीम् । समालिङ्ग्य सधैर्याऽहमपृच्छमादरादिति ॥ ७१८ ॥

सखि ! मत्स्वामिनो रूपमधुना कालयोगतः । विपर्यस्तं कथं भद्रे ! त्वयाऽसावुपलक्षितः ॥ ७१९ ॥

तदा सा मां जगादेति भगिनि ! त्वत्पतिर्मया । यथोपलक्षितस्तत्त्वं शृणुष्व कथयामि ते ॥ ७२० ॥
त्वया परीक्षितुं यद्यत् सूचनं सूचिताऽभवम् । तत्सर्वं हृदि संस्थाप्य गृहीतालेख्यकाऽचलम् ॥ ७२१ ॥
वेदिकायां सुचित्राणि संस्थाप्य तत्र तस्थुषी । तावत्कुमुदसन्मित्रमुदितो रात्रिवल्लभः ॥ ७२२ ॥
विस्तारयन् सितं तेजः सर्वत्र धरणीतले । कामदेवप्रियश्चन्द्रः शनैरारोहदम्बरम् ॥ ७२३ ॥
सरःपयसि पाथोजं प्रफुल्लमिव निर्मले । नभःपटे शशाङ्कः स दीप्यति स्म विकस्वरः ॥ ७२४ ॥
तस्मिन्नवसरे लोका राजान इव वर्त्मनि । रथारूढा धनैर्मत्ता विहर्तुं निर्गता बहिः ॥ ७२५ ॥
नैशिकाऽलङ्कृतिं द्रष्टुं रमणीयतरां मुदा । सुन्दरं रथमारूढा निरीयुरातुराः स्त्रियः ॥ ७२६ ॥
युवानो युवतीभिश्च साकं कृतकरग्रहम् । मिथो वक्षोभिरापीड्य प्रचेलुर्मुदिताशयाः ॥ ७२७ ॥
अमन्दाऽऽनन्दमापन्नो जनव्रातः परस्परम् । मिलित्वा स पुनः पश्चाद्वलित्वा सह जग्मिवान् ॥ ७२८ ॥
वर्षायां पयसामोघो नदीरूपधरो यथा । महोदधिं जनव्रातो राजमार्गमुपेयिवान् ॥ ७२९ ॥
उन्नता ये जना आसन् पश्यन्तिस्म सुखेन ते । चित्राणि वामनाश्चात्र पादाङ्गुष्ठाश्रिताः श्रमात् ॥ ७३० ॥
बहवः स्थूलवपुषः परस्परनिपीडनात् । कष्टध्वनिं प्रकुर्वाणा व्याकुला जज्ञिरे भृशम् ॥ ७३१ ॥
विचरन्तो जनाः केचि-द्गतां रात्रिं मनस्विनः । नाऽविदन् चित्रितस्वान्ताश्चित्राणां वीक्षणे रताः ॥ ७३२ ॥
कियन्तश्च प्रदीपानां वर्तिकां ज्वलितामपि । अर्द्धप्रायां व्यलोकन्त निजदृष्टिभिरुन्मदाः ॥ ७३३ ॥

रात्रिर्यथा यथाऽगच्छल्लोचनानि तथा तथा । निद्रया घूर्णितान्यासन् जनानां कियतां सखि ! ॥ ७३४ ॥
तेषां क्षीणोऽभिलाषोऽभूद् दिदृक्षूणां शनैः शनैः । ततः संकीर्णताऽनश्यज्जनानां राजवर्त्मनि ॥ ७३५ ॥
स्तोका एव जनास्तत्र चित्राणां सन्निधौ स्थिताः । अहं वेलाञ्च लोकांश्चा–पश्यं दीपममीक्ष्णशः ॥ ७३६ ॥
तदानीं निजमित्राणां समानवयसां युवा । एको मध्यगतस्तत्र रममाणः समागतः ॥ ७३७ ॥
प्रतिकृतिप्रकारांश्च प्रेक्षितुं वीक्षणोत्सुकः । स्वरूपनिर्जिताऽनङ्गोऽनन्यदृष्टिरभूत्ततः ॥ ७३८ ॥
कूर्मवन्मृदुपादः स रम्यगुल्फाऽकृतिस्तथा । बलिष्ठजङ्घायुगलो विशालोरः स्थलो बभौ ॥ ७३९ ॥
बभूवतुः करौ तस्य स्थूलावाजानुदीर्घकौ । निजमित्रमुखान्येषोऽ–म्बुजानीव विकासयन् ॥ ७४० ॥
तेषां मध्ये व्रजंश्चंद्र इवाधिकविभाचयः । तस्मादपि रराजोर्वी–देवीभालविभूषणम् ॥ ७४१ ॥
तस्य यौवनसौन्दर्यं मार्दवं विस्मयप्रदम् । विलोक्य प्रमदावृन्दं तमेवैक्षिष्ट रागतः ॥ ७४२ ॥
एकाऽपि प्रमदा नासीद् यस्या हृदयसद्मनि । निवासं नाकरोदेष–कामरूपविजित्वरः ॥ ७४३ ॥
लोका एवं वदन्तिस्म दिव्यरूपधरो भुवि । किंस्वित्साक्षादयं देवः कौतुकाय समागतः ॥ ७४४ ॥
विलोक्यैतानि चित्राणि कियत्कालन्तदीयकम् । कलाकौशल्यमुत्कृष्टं वर्णयन्नित्यवोचत ॥ ७४५ ॥
अत्र सैकतयोर्मध्ये निम्नस्थलप्रवाहिनी । कल्लोलैरद्भुता गङ्गा चित्रिताऽतीवसुन्दरा ॥ ७४६ ॥
फलैर्वनसमुद्भूतैरृतुभिः शरदादिभिः । पुष्पैश्च कीदृशी भव्या शोभतेऽमरनिम्नगा ॥ ७४७ ॥

प्रफुल्लपङ्कजै राज-त्सरोवरविराजितम् । विविधैर्भूरुहव्रातैः कीदृशं शोभते वनम् ॥ ७४८ ॥

अहो ! रथाङ्गयुगलं स्नेहपञ्जरपूरितम् । जीवितव्यप्रवाहेण सङ्गतं दृश्यते मिथः ॥ ७४९ ॥

अत्र वारितरङ्गेषु सहोभौ तरतः सुखम् । तत्र तौ सैकते शुभ्रे सार्द्धं विश्राम्यतो मुदा ॥ ७५० ॥

सहैवाऽन्यत आकाशे डयते युगलं तयोः । इतः कमलपुञ्जानां मध्यदेशे सुवासिते ॥ ७५१ ॥

तिष्ठतोऽनुगतस्नेहावन्योन्याकाङ्क्षया युतौ । दम्पती सर्वदा सार्द्धं सर्वतो बद्धसौहृदौ ॥ ७५२ ॥

चक्रवाकस्य कण्ठोऽयं ह्रस्वश्चातिमनोहरः । पलाशपुष्पसङ्काशो वर्णोऽस्ति चास्य लोहितः ॥ ७५३ ॥

चक्रवाकी मृदुह्रस्व-कण्ठी स्वकीयवर्णतः । कोरण्टकुसुमाकारा कीदृशी भासतेऽद्भुता ॥ ७५४ ॥

चक्रवाकं प्रियं स्वीय-मनुयान्तीयमुत्तमम् । नाटयन्ती गतिं रम्यां मोदमाना विराजते ॥ ७५५ ॥

द्विरदोऽयं मदोन्मत्तश्चित्रितावयवोऽद्भुतः । कुञ्जराणामसौ मुख्यो दृश्यते वनचारिणाम् ॥ ७५६ ॥

वृक्षषण्डेन दुर्गम्ये विपिने निजवर्त्म च । विधातुं भूरुहां शाखा स्त्रोटयन्व्रजति क्षितौ ॥ ७५७ ॥

नद्यां स्नातुमना लुब्धो नीचैरवतरत्यपि । ततो भव्यशरीरोऽयं बहिर्निःसरति द्विपः ॥ ७५८ ॥

तस्मिन्नवसरे तत्र व्याधो लक्ष्यीकरोति तम् । शरेणाऽऽलीढसंस्थानः कर्णान्ताकृष्टकार्मुकः ॥ ७५९ ॥

शरं क्षिपति तत्पश्चा-दद्भुतं तच्च चित्रितम् । सकलं सुन्दराकारं कलानैपुण्यसंयुतम् ॥ ७६० ॥

इतः शालिफलाधार-पद्मतन्तुसमानया । प्रभया रक्तया दीप्यन् चक्रवाकोऽयमम्बरे ॥ ७६१ ॥

ड्यतेऽयमिषुस्तीक्ष्णो विध्यति तमनागसम् । निरीक्ष्य चक्रवाकीयं विलपत्यतिदुःखिता ॥ ७६२ ॥
यतोऽनेन पिशाचेन व्याधेन स्वपतेः प्रियम् । जीवनं स्नेहवल्ली च नाशिता क्रूरचेतसा ॥ ७६३ ॥
विलपन्ती भृशं चक्रवाकीयं निजदुःखतः । अनुगच्छति भर्त्तारं चिताग्नौ जुह्वती वपुः ॥ ७६४ ॥
उत्सवेऽद्यतने दृश्यं यत्किञ्चिद्विद्यते खलु । तन्मध्येऽमूनि चित्राणि हृद्यानि प्रतिभान्ति मे ॥ ७६५ ॥
परन्त्वियं चित्रमाला वीक्षितव्या क्रमान्मया । सकला सावधानेन सुन्दराकारशालिनी ॥ ७६६ ॥
वदन्नेवं स मर्त्यस्तु शोभनाङ्गोऽतिकौतुकात् । तानि चित्राणि पश्यन्सन् मूर्च्छितो न्यपतद्भुवि ॥ ७६७ ॥
दण्डे जीर्णे यथा भूमौ ध्वजः पतति सत्वरम् । तथैव धरणीपीठे लुठतिस्म स सुन्दरः ॥ ७६८ ॥
चित्राणि वीक्षमाणास्तत्सुहृदस्त्वेकदृष्टिभिः । तल्लीना नैव तत्पातं जानन्ति स्म विचक्षणाः ॥ ७७९ ॥
क्षणात्तं मूर्च्छितं भूमौ पतितं वीक्ष्य दुःखिताः । उद्धृत्य दूरतस्तेऽपि निन्युः स्थानं सुशीतलम् ॥ ७७० ॥
विचित्राणि सुचित्राणि निरीक्ष्यैव विचेतनः । संजात इति विज्ञाय तस्मात्तं दूरतो व्यधुः ॥ ७७१ ॥
कदाचित्सैव पुरुषरूपेण तव वल्लभः । चक्रवाको भवेच्चैवं सिद्ध्येत्तव मनोरथः ॥ ७७२ ॥
संप्रधार्येति तत्पृष्ठे गता तत्त्वबुभुत्सया । यदैष चेतनां प्राप्तो रुद्धकण्ठस्तदाऽवदत् ॥ ७७३ ॥
रे प्रिये ! मन्महाऽऽनन्ददायिनी क्व गताऽधुना । नीलोत्पलदलश्याम–नयना त्वं शुभाकृतिः ॥ ७७४ ॥
यदैकदा चक्रवाक–जन्मनि स्नेहिनो वयम् । गङ्गाकल्लोलमङ्गेष्व–मोदामहि तदाऽभवः ॥ ७७५ ॥

इदानीन्तु त्वया हीनो जातोऽस्मि मूढमानसः । स्नेहध्वज इव त्वं मे पृष्ठानुसारिणी भव ॥ ७७६ ॥
मृतेऽपि त्वं मयि स्नेहात् त्यक्त्वा देहं निजं स्वयम् । प्राप्तासि मद्गतिं सुभ्रु ! क मिलिष्यसि मे पुनः ॥ ७७७ ॥

लज्जां विहायाऽश्रुजलेन कर्तुं, विलापजालं मलिनाऽऽननः सः ।
शोकानलोत्तप्तशरीरकान्ति-र्लग्नस्तथान्तःकलितोरुपीडः ॥ ७७८ ॥

हे भामिनि ! त्वं मदखण्डयोगं, पुराऽमजः प्रेमविपाशबद्धा ।
सहिष्यसेऽद्यापि कथं सुगात्रि ! कियच्चिरं तिष्ठति भूतलेऽब्जम् ॥ ७७९ ॥

विलपन्तमिति भ्रान्तं विज्ञाय तत्सुहृद्गणः । तमुपालब्धवान् शीघ्रं स्वस्थं निर्मातुमुद्यतः ॥ ७८० ॥
मुधा शोचसि किं मित्र ! भ्रान्तचित्त इवासि किम् । कुतो विमूढधीर्जातः किन्ते मनसि वर्तते ॥ ७८१ ॥
यथार्थं स्वीयवृत्तान्तं तेषामग्रे निवेद्य सः । पुनस्तान् कथयामास नैव भ्रान्तिगतोऽस्म्यहम् ॥ ७८२ ॥
ततस्ते सुहृदः प्रोचुः किं जातं तव चेतसि । कारणं सत्वरं ब्रूहि दुःखशल्यस्य साम्प्रतम् ॥ ७८३ ॥
सोऽपि तानब्रवीद्वाक्यं वृत्तान्तं सकलं निजम् । कथयामि तथाप्येत-न्न प्रकाश्यं कदाचन ॥ ७८४ ॥
चक्रवाककथेयं याऽनेकचित्रेषु चित्रिता । सा मम प्राग्भवस्या-स्ति निश्चितं तन्निबोधत ॥ ७८५ ॥
तेऽब्रोचन् मित्र ! तद्वृत्तं सत्यं ज्ञेयं कथं तव । जन्मान्तरोदन्तमिदं कथं त्वं स्मृतवानसि ॥ ७८६ ॥
तदा प्रत्येकचित्रस्य घटनां प्राग्भवस्य सः । यथार्थं घटयामास मन्दं मन्दं ततोऽवदत् ॥ ७८७ ॥

व्याधप्रहितबाणेन मयि मृत्युवशंगते । सत्यभून्मत्प्रियाऽकस्माचज्ज्ञातं चित्रदर्शनात् ॥ ७८८ ॥
चित्रदर्शनतो नूनं हृदयं मेऽतिपीडितम् । न जानेऽहं कथं प्राप्य मूर्च्छां भूपीठमासदम् ॥ ७९९ ॥
चित्राण्येतानि दृष्ट्वा मे पूर्वजन्मकथानकम् । प्रत्यक्षीभूतमेतच्च भवतां कथितं मया ॥ ॥ ७९० ॥
श्रूयतां निश्चयोऽत्राथ मदीयो मित्रमण्डल ! । तां विनाऽन्यस्त्रिया सार्द्धं लग्नेच्छा मम नास्ति वै ॥ ७९१ ॥
तस्मात्केनाऽप्युपायेन तया साकं समागमः । मम स्याच्चेन्महानन्दः स्नेहस्य प्रभवेद् ध्रुवम् ॥ ७९२ ॥
यूयं व्रजत मित्राणि वीक्षध्वं बुद्धिपूर्वकम् । चित्राण्येतानि केनेह चित्रितानि समानि यत् ॥ ७९३ ॥
नूनमेतानि चित्राणि तयैव कारितान्यलम् । अन्यथा मामकं वृत्तं कथमन्यो हि चित्रयेत् ॥ ७९४ ॥
स्वयं वैतानि चित्राणि चित्रितानि तया मुदा । अस्तु तामन्तरापत्नीमपरां कर्तुमक्षमः ॥ ७९५ ॥
यद्भवे चक्रवाकोऽहं भूत्वा साकं तयाऽरमे । तद्वृत्तान्तं विजानीते कथमन्या सुमध्यमा ॥ ७९६ ॥
इति तस्योक्तिमाकर्ण्य सख्यहं सत्वरं ततः । पृच्छकानुत्तरं दातुमगमं चित्रसन्निधौ ॥ ७९७ ॥
अथाऽञ्जसा गतिं कुर्वन् शोधयन् कश्चिदागतः । पप्रच्छ मां विनीतात्मा स्वकार्यसाधनोद्यतः ॥ ७९८ ॥
अखिलान् पुरवास्तव्यान् कुर्वन्ति चकितान् भृशम् । चित्राण्येतानि केनाऽत्र चित्रितानि वदाऽधुना ॥ ७९९ ॥
मया प्रत्युत्तरं दत्तं नगरश्रेष्ठिनः सुता । तरङ्गवत्यमुं चित्र-प्रकरं सुमनोहरम् ॥ ८०० ॥
चित्रयित्वा सुरम्येऽस्मिन् मोचयामास चत्वरे । पूर्वजन्माऽनुभूतस्य वृत्तान्तस्याऽनुसारतः ॥ ८०१ ॥

चित्रितानीह चित्राणि निजकल्पनया नहि । सत्यमेतद्विजानीहि स्वानुभूतं हि चित्रितम्. ॥ ८०२ ॥
किंचवृत्तान्तमेतच्च वर्णितं तस्य सन्निधौ. । ततः स त्वत्पतेः पार्श्वे जगाम त्वरयाऽन्वितः. ॥ ८०३ ॥
तयोर्वार्त्ताप्रबन्धं च श्रोतुमप्यहमुत्सुका । तमन्वगच्छं धावन्ती त्वदीयहितवाञ्छया. ॥ ८०४ ॥
तत्र गत्वाऽब्रवीदाशु पृच्छकः पुरुषः स तम्- । "मा कुरु मित्र ! चिन्तां त्वं पद्मदेव !, तव प्रिया ॥ ८०५ ॥
विद्यमानाऽस्ति, तद्वार्ता मिलिता साम्प्रतं मम. । सुता ऋषभसेनस्य नगरश्रेष्ठिनोऽस्ति सा. ॥ ८०६ ॥
तरङ्गवत्यभिख्या च. तया चित्रगणोऽद्भुतः । मोचितो लोकवीक्षार्थे चत्वरेऽस्मिन् सुचित्रितः. ॥ ८०७ ॥
तस्याः सख्याः प्रदत्तेन मत्प्रश्नस्योत्तरेण च । मया तन्निश्चितं सत्यं वृत्तान्तं करुणामयम्." ॥ ८०८ ॥
एतद्वार्त्तां समाकर्ण्य त्वद्भर्तुर्मुखमद्भुतम् । प्रफुल्लपङ्कजमिव चकासे हृष्टचेतसः. ॥ ८०९ ॥
ततः सोऽचीकथन्मित्रं सानन्दमयजीवनम् । "भविष्यति ममेदानीं सफलश्च मनोरथः. ॥ ८१० ॥
यदियं चक्रवाकी मे पूर्वजन्मनि वल्लभा । नगरश्रेष्ठिनः पुत्री गृहे जाताऽस्ति साम्प्रतम्." ॥ ८११ ॥
पुनश्चिन्तातुरो भूत्वा पद्मदेवोऽञ्जसाऽवदत्- । "तत्कन्यायाचकाः सर्वे निषिद्धास्तेन मानिना. ॥ ८१२ ॥
प्रभूतधनवानस्याः पिताऽस्ति बुद्धिमत्तरः.। अखिले नगरे मान्यः. कन्यां दत्ते कथं निजाम् ? ॥ ८१३ ॥
तस्मादस्मन्मनोऽभीष्ट-प्राप्तिर्नैव भविष्यति. । मानिनो हि न मुञ्चन्ति कदापि निजमाग्रहम्. ॥ ८१४ ॥
प्रियाशुद्धिमनुप्राप्य यदि तां न मिलाम्यहम् । तदाऽप्यतरं दुःखं पूर्वस्मादधिकं भवेत्." ॥ ८१५ ॥

तन्मित्रमवदद्–"बन्धो ! लब्धा शुद्धिस्तदीयका. । नास्ति काचित्क्षतिर्भद्र ! सर्वं भव्यं भविष्यति. ॥ ८१६ ॥
वस्तुनि विद्यमाने हि तल्लाभो जायते नृणाम्. । उपायेन समं कार्यं सिद्ध्यत्येव, न संशयः. ॥ ८१७ ॥
अधुनाऽपरिणीता सा तिष्ठति पितृसद्मनि. । कन्याकृते करिष्यामो याचनां श्रेष्ठिनः पुरः. ॥ ८१८ ॥
एवं कृतेऽपि नो कार्यं सेत्स्यति चेत्तवेप्सितम्, । तदाऽपहरणं कृत्वाऽऽ–नेष्यामस्तां प्रयत्नतः. ॥ ८१९ ॥
पद्मदेवस्ततोऽवादीत् "स्वकुलाचारमागतम् । प्राक्तनं नगरश्रेष्ठी लङ्घयिष्यति नैव सः. ॥ ८२० ॥
यद्यपि निजनन्दिन्यां स्नेहस्तस्यास्ति हार्दिकः, । तथापि कुलमर्यादां पालयन्ति मनस्विनः. ॥ ८२१ ॥
श्रेष्ठी निजां सुतां मह्यं कदापि नैव दास्यति. । ततोऽहं जीवनस्यान्तं करिष्यामि, न संशयः ॥ ८२२ ॥

इष्टस्य लाभे त्रिदिवायते क्षितिः, तमन्तरा निष्फलमेव जीवनम्. ।
स्वेच्छानुकूलश्च न वैभवो भवेत्, तदा तु मृत्युर्वरमेव कथ्यते. ॥ ८२३ ॥
सम्पत्तिसत्ताकुलमानमत्तः प्रेम्णो न जानाति दयार्द्रभावम्. ।
प्रेमप्रभावो नहि यत्र तत्र, दयाप्रकर्षश्च कुतस्तदा स्यात्. ॥ ८२४ ॥
जानन्ति ये धर्मपथं विवेकिन–स्त एव राजन्ति दयादिवृत्तयः. ।
प्रेमप्रभावं च त एव जानते, यत्रैव तत्त्र समत्वभावना. ॥ ८२५ ॥
स्वापत्यशश्वद्धितकारिणा सदा पित्रादिना योग्यविधिर्विधेयः. ।

न यत्र योग्यार्थविचारणा भवेत्, स्यात्तत्र सद्धर्मगतिः सुदुर्लभा. ॥ ८२६ ॥

पुत्रश्च पुत्री प्रथितेन पित्रोः सुशिक्षणेनैव सुमार्गमेति. ।
ततः स्वयं तौ सुखसंपदाढयौ स्वजीवनं श्रेष्ठतरं विधत्तः. ॥ ८२७ ॥

प्राचीनसंस्कारत एव शुद्ध–स्नेहस्तथा द्वेषमतिर्भवेताम्.
तयोः प्रवृत्तिर्निजकर्मयोगात् स्वजीवनं तद्वशवर्त्ति लोके. ॥ ८२८ ॥

यतः–"यस्मिन् दृष्टे मनस्तोषो दोषाऽभावश्च जायते, । स विज्ञेयो मनुष्येण बान्धवः पूर्वजन्मनः. ॥ ८२९ ॥

यस्मिन्दृष्टे मनोद्वेषस्तोषाऽभावश्च जायते. । स विज्ञेयो मनुष्येण प्रत्यर्थी पूर्वजन्मनः." ॥ ८३० ॥

किन्तु त्वत्कथितं कर्म न विधास्येऽधमोचितम्. । अपकृत्य विधानाद्धि वरं मृत्युर्मनीषिणाम्." ॥ ८३१ ॥

ततो मित्रजनः सर्वः श्रेष्ठिसूनुसमन्वितः । तस्य हर्म्यसमीपाय चिन्ताऽऽचान्तमनःसराः. ॥ ८३२ ॥

तत्कुटुम्बादिनामानि स्थानं च ज्ञातुमिच्छया ।ताननुगच्छं त्वरिताऽहमपि व्यथयाऽऽकुला. ॥ ८३३ ॥

यं प्रासादं प्रविष्टास्ते, स नभस्तलमाश्रितः. । स्वर्गादपाहृतं दिव्यं विमानमिव भूतले. ॥ ८३४ ॥

तत्पितुर्नाम–जात्यादि यथार्थं निश्चितं मया. । सन्तुष्टमानसा शीघ्रमागताऽहं निजास्पदम्. ॥ ८३५ ॥

तस्मिन्नवसरे सद्यो नक्षत्राणि ग्रहास्तथा । चन्द्रोऽपि क्रमतोऽदृश्यो बभूव नभसोऽङ्गणे. ॥ ८३६ ॥

विलूनवारिजन्मौघो जलाशय इवाम्बरम् । निरलङ्कृततां भेजे. निर्धनः शोभते किमु ? ॥ ८३७ ॥

" अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि,
क्षणं क्षीणास्तारा नृपतय इवानुद्यमपरा. न दीपा राजन्ते द्रविणरहितानामिव गुणाः. " ॥ ८३८ ॥
" यथास्थूलं मूलेऽवतरति दशामर्थनिकरो–यथासूक्ष्मं लक्ष्मीं त्यजति विधुरस्तारकगणः ।
यथावृद्धं बन्धः कमलमुकुलानां विघटते, यथानिम्नं भूम्ना रचयति पदं ध्वान्तनिचयः. "
ततः सर्वजगन्मित्रं दिनभर्ता विभाकरः । बन्धुजीवसमो रक्तः पूर्वाद्रिमानुमास्थितः. ॥ ८३९ ॥
दिङ्मण्डलं यदीयेन तेजसा कनकप्रभम् । बभासे भासमानेन पक्षिनादेन नादितम्. ॥ ८४० ॥
तस्मिन्नेव क्षणे सर्वं वृत्तान्तं विनिवेदितुम् । धावन्ती त्वरमाणाऽहमागताऽस्मि तवान्तिकम्. ॥ ८४१ ॥
त्वद्भर्तृप्राप्तये यद्यद् वृत्तान्तं ज्ञातवत्यहम् । तत्सर्वं कथितं तुभ्यं मयेदं तथ्यवाचया. ॥ ८४२ ॥
विश्वासो यो मयि न्यस्तस्त्वया सोऽद्य फलेग्रहिः । सञ्जातोऽस्तीत्यहं मन्ये, चिन्ता नास्त्यधुना सखि ! " ॥ ८४३ ॥
मत्सख्या पूर्णवृत्तान्ते कथितेऽहं तदाब्रवम् । व्याकुलीभूय–"तन्नाम व्यवसायादिकं वद." ॥ ८४४ ॥
सारसिका ततः प्रोचे–"तत्पिता यशसोज्ज्वलः । क्षिति–सागर–जन्यानां पतिर्विविधसंपदाम्. ॥ ८४५ ॥
गाम्भीर्येण जितस्सिन्धुस्स्थैर्येण च हिमालयः । प्रचण्डांशुः प्रतापेन तेजसा च विनिर्जितः. ॥ ८४६ ॥
धरणी दानशालाभिर्भूषिता जैनधर्मिणा । येन. तन्नाम सर्वत्र धर्मात्मेत्यभिधीयते. ॥ ८४७ ॥
श्रेष्ठिनस्तस्य नामास्ति धनदेव इति क्षितौ । प्रसिद्धमनवद्यं च सर्वलोकप्रियङ्करम्. ॥ ८४८ ॥

पद्मदेवाभिधस्तस्य पुत्रोऽस्ति जनवल्लभः. रूपेण कामजिच्चैव पद्मपत्रमनोहरः. ॥ ८४९ ॥
माता शीलसमायुक्ता धर्मकर्मपरा सदा । नाम्ना वसुमतीत्यस्ति क्षमादिगुणमण्डिता." ॥ ८५० ॥
सखीमुखान्निशम्येति सुधासारवचस्ततिम् । समुत्कण्ठितकर्णौ मे परां तृप्तिमवापतुः. ॥ ८५१ ॥
वृत्तान्तज्ञानतो धन्या-प्यधन्या दर्शनं विना. । तथापि तत्प्रशंसायां तत्पराऽऽसं प्रमोदतः. ॥ ८५२ ॥
"भगिनि ! त्वं क्षितौ भाग्यशालिनी विद्यसे ध्रुवम्, । यतस्ते दर्शनं जातं स्वामिनो मम शोभनम्. ॥ ८५३ ॥
वचांसि तस्य भद्रस्य श्रुतानि सुखदानि च । प्रत्यक्षतस्त्वया, भद्रे ! किमन्यद्भाग्यलक्षणम्?". ॥ ८५४ ॥
व्रजन्ती सा पुनः प्रोक्ता मयाऽऽनन्दितचेतसा । "भर्तृप्रेमनिमग्नायाः शोकः सखि ! पलायितः." ॥ ८५५ ॥
ततोऽहं विहितस्नाना विधाय गुरुवन्दनम् । जिनेन्द्रपूजनं कृत्वा पारणां कृतवत्यहम्. ॥ ८५६ ॥
पारणाश्रमतः खिन्ना कटमास्तीर्य शोभनम् । विश्रामाय गता वायु-शीतले गृहखण्डके. ॥ ८५७ ॥
स्वामिसमागमाशाभिर्बहुभिर्मूढमानसा । तत्स्नेहेन वियुक्ताऽपा-नयं समयं स्वयम्. ॥ ८५८ ॥
तदा सारसिका पश्चादागता श्वासपूरिता । नेत्रयोरश्रुसन्दोहं वहन्ती बदरोपमम्. ॥ ८५९ ॥
मामवोचत शोकार्ता-"सर्वलोकशिरोमणिः । धनदेवः स्वयं मित्र-मण्डलेन समन्वितः ॥ ८६० ॥
सम्बन्धिभिः समं श्रेष्ठी त्वत्तातान्तिकमागतः. । तेन स्पष्टं वचः प्रोक्तं निजकार्यविधित्सया- ॥ ८६१ ॥
"श्रेष्ठिन् ! त्वदीयपुत्री मे सुताय गुणशालिने । दीयतां चेच्छुभाकाङ्क्षा युष्माकं वर्ततेऽधुना. ॥ ८६२ ॥

मत्पुत्रोऽभ्यस्तविद्योऽस्ति कलाकौशलवानसौ । पद्मदेव इति ख्यातः पृथिव्यां पृथुलश्रिया." ॥ ८६३ ॥
नगरश्रेष्ठिना त्वेवमेनहँ श्रावितं वचः । "यो व्यापारकृतेऽजस्रं देशान्तराणि सेवते, ॥ ८६४ ॥
गृहावासविहीनाय नित्यं दासीजनैः सह । रममाणाय मत्पुत्रीं दास्यामि कथमद्भुताम्? ॥ ८६५ ॥
यदि दास्यामि तत्तस्मै प्रोषितस्वामिका यथा । सदा मलिनकेशी सा तिष्ठेत्सद्मनि दुःखिता. ॥ ८६६ ॥
अलङ्कारान्समाधर्त्तुं लभ्येत समयोऽपि नो । कदाचिदपि मत्पुत्र्या सत्कुलोद्भूतयाऽनया. ॥ ८६७ ॥
स्वामिवियोगिनी साश्रुलोहिताक्षी च सर्वदा । कालं नयेत्तपस्येषा तथा पत्रादिलेखने. ॥ ८६८ ॥
एवं मद्दुहिता श्रेष्ठि–गृहे दत्तापि शोभने । विभवे विपुलेऽशान्त्या पीड्येत सुखवर्जिता. ॥ ८६९ ॥
"जातिरूपवयोविद्या आरोग्यं बहुपक्षता । उद्यमो वृत्तयुक्तत्व–मष्टावेते वरे गुणाः. ॥ ८७० ॥
मूर्खनिर्धनदूरस्थ–शूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणामपि देया न कन्यका. ॥ ८७१ ॥
सामान्याय ततो देया वरं कन्याऽपरस्य नो. । भूषणादिपदार्थानां नैवास्ति मे प्रयोजनम्." ॥ ८७२ ॥
इति सारसिकाऽवादीत्–"तातेन तव हे सखि ! । श्रेष्ठिनः प्रार्थनाभङ्गो विहितो. न कृतं वरम् ॥ ८७३ ॥
असभ्यवचनं श्रुत्वा मानहानिसमाकुलः । श्रेष्ठी तु स्वगृहं यातः शोकसंविग्नमानसः." ॥ ८७४ ॥
सारसिकानिगदिता वार्त्तेयं श्रुतिमात्रतः । यथाब्जनालं श.तत्तु–रमनङ्गमन्मनोरथम्. ॥ ८७५ ॥
मदीयं सर्वं सद्भाग्यं तदानीं तु विनिर्गतम्. । आशु मे हृदयं शोकात् परिपूर्णमभूत्तदा. ॥ ८७६ ॥

निरानन्दतया मूढा निर्मर्यादाश्रुलोचना । सारसिकां रुदन्तीं तां वचोऽवोचमिदं पुनः— ॥ ८७७ ॥
"मद्भर्तेषु-प्रहारेण जगाम मरणं पुरा. । अहमप्यैहिकं दुःखं त्यक्त्वा तद्गतिमाप्नुवम्. । ॥ ८७८ ॥
इदानीमप्यसौ जीवेत्तदा मे जीवनं भवेत्, । अन्यथा मरणं भावि मदीयं. नैव संशयः. ॥ ८७९ ॥
पक्षिजन्मन्यहं स्नेहान्मृताऽहं दुःखपीडिता. । मानवं भवमासाद्य कथं जीवामि तं विना ? ॥ ८८० ॥
सारसिके ! व्रजाशु, त्वं तत्र गत्वा समर्पय । पत्रमेतत्तथा तस्मै वाचिकं मे निवेदय. ॥ ८८१ ॥
"वेपमानाङ्गुलीभिव लिखितं भूर्जपत्रकम् । मत्सखी—वेदनाक्रान्तां प्रेमवार्तां वदिष्यति. ॥ ८८२ ॥
"पत्रं त्विदं लघुतरं, वृत्तान्तं चातिविस्तृतम्. । मत्सखीपाणिना पत्रमेतत्तुभ्यं प्रदीयते." ॥ ८८३ ॥
सखीमप्यगदं—"वाच्यं तदात्मशान्तिहेतवे । प्रेमतत्त्वमयं वाक्यमित्थं मच्छर्मसाधनम्. ॥ ८८४ ॥
"स्वभर्तारमनुप्राप्तुं चक्रवाक्या भवे यया । मृत्युरङ्गीकृतः सैव जाताऽस्मि श्रेष्ठिनः सुता. ॥ ८८५ ॥
भवतोऽन्वेषणार्थं च चित्तमोहविधायिनी । रचिता चित्रमालेयं मया दुःखार्तचेतसा. ॥ ८८६ ॥
एकदाऽस्याः समीपे त्वमागतस्तन्मनोरथः । सिद्ध एव भवेत्तस्माध्हृदयोल्लासदायकः. ॥ ८८७ ॥
प्राग्भवेऽदृश्यतां यातस्त्वमद्य मिलितः प्रभो ! , । प्राचीनस्नेहबन्धश्चेज्जागर्ति, रक्ष जीवितम्. ॥ ८८८ ॥
त्वं स्वीयजीवितव्येन साकं मद्रक्षणं कुरु. । त्वत्सखीजीवनं चैव त्वदायत्तं विभावय." ॥ ८८९ ॥
पुनरप्यवदच्छ्रेष्ठिसुता सारसिकां प्रति । "आवयोर्बन्धरूपोऽयं यावत्स्नेहः प्रसिध्यति, ॥ ८९० ॥

तावद्वार्ताप्रसङ्गोऽपि न प्रकाश्यो विचक्षण !। वृत्तं चेदं गोपनीयं" विज्ञाप्यः स इति त्वया." ॥ ८९१ ॥
विविधं वृत्तमन्यच्च सर्वसौख्यकरं शुभम् । बहुधा कथयित्वा तां प्रैषयं पत्रिकाकराम्. ॥ ८९२ ॥
शपथेन समं प्रोक्ता मया सा,"ऽस्मत्समागमः । भवेत्तथैव कर्तव्यं भवत्या, स्नेहवर्द्धकः ॥ ८९३ ॥
आवयोः सङ्गमः सद्यः स्यात्तथोदन्तमुत्तमम् । आनेतव्यं त्वया सम्यग् मद्रक्षैकविधायकम्." युग्मम् ॥ ८९४ ॥
ततः सारसिका पत्रं गृहीत्वा मत्पतेः पुरः । अगच्छन्मम चित्तेन सार्द्धं सत्वरगामिनी. ॥ ८९५ ॥
तस्यां गतायां चिन्तार्ता पीडिताहं विनिश्चयम् । अकार्षं वपुषा कार्श्यं दधाना श्वासपूरिता. ॥ ८९६ ॥
"दैवात्प्राग्जन्मभर्ता मे जानेऽहं स मिलिष्यति. । मच्चिन्तितं ध्रुवं भावि. योगोऽयं कथमन्यथा ? ॥ ८९७ ॥
शुभस्वप्नोदयश्चव शकुनानि शुभानि च । अनुकूलास्तथायोगा योजयन्ति सदा-ऽऽयतिम्. ॥ ८९८ ॥
शुभदैववशान्नॄणां निजकर्मानुसारतः । सर्वमेव शुभाशंसि जायते यत्नमन्तरा. ॥ ८९९ ॥
यत्ने कृतेऽपि लोकेऽस्मिन् वैपरीत्यं गते विधौ । देहिनां दीर्घदृष्टीनां मनोभीष्टं न सिद्ध्यति. ॥ ९०० ॥
प्राचीनकर्मजं दुःखं सुखं च प्राणिनां ध्रुवम्. । सुखदुःखविधाता हि नान्योऽस्ति भूतलेऽङ्गिनाम्. ॥ ९०१ ॥
यद्भावि तद्भवत्येव संचितं पूर्वकर्मणा. । अतः कर्मबलं लोके मतमालम्बनं दृढम्. ॥ ९०२ ॥
एवं तरङ्गवत्यां हि कुर्वन्त्यां कल्पनां हृदि । पत्रं दत्त्वा सखी तस्याः सविधे समुपागता. ॥ ९०३ ॥
उवाच—"भगिनि ! पत्रं गृहीत्वेतो गता बहिः । राजमार्गस्थहर्म्याणामन्तिके प्राचलं मुदा- ॥ ९०४ ॥

अनेकचत्वराण्याशु लङ्घयित्वाऽहमद्भुतम् । प्रासादमेकं निकषा स्थिता भव्यं प्रभायुतम्. ॥ ९०५ ॥

धनाध्यक्षाब्धिजायोगः सञ्जात इव तत्र वै । प्रासाद एकदिव्यर्द्धिर्बभासे संपदान्वितः. ॥ ९०६ ॥

साशङ्कमनसाहं तु प्रासादद्वारमासदम्. । द्वारपालः स्थितस्तत्र गृहरक्षाविधायकः. ॥ ९०७ ॥

दासीनां संघर्षस्तत्र कुर्वन्तीनां गतागते । मध्यादपि नवीनां मामुपलक्ष्यावदच्छनैः,– ॥ ९०८ ॥

"कुतः समागतासि त्वमत्राऽऽगमनकारणम् । किमस्ति ? झटिति ब्रूहि, याहि पश्चादितोऽबले !" ॥ ९०९ ॥

"स्त्रियः छद्मगृहं प्रायो" मया कूटोत्तरः कृतः । "अज्ञाताऽसीति सत्योक्तिस्तवास्ति द्वाररक्षक ! ॥ ९१० ॥

युष्मत्स्वामिकुमारेण समाहूताऽस्मि साम्प्रतम्" । यामिकोऽथावदत् "कश्चिन्मां न वञ्चयितुं क्षमः." ॥ ९११ ॥

प्रशंसन्त्या मया प्रोक्तं "येषां द्वारि भवादृशः । तिष्ठन्ति रक्षकास्ते स्युः श्रेष्ठिनः सुखिनः सदा. ॥ ९१२ ॥

मां नय त्वं कुमारस्य समीपे श्रेष्ठिनोऽञ्जसा." । मद्वाक्यजातहर्षोऽसौ कथयामास मां ततः.– ॥ ९१३ ॥

"मयि विश्वस्तनारीणां कार्यं सद्यः करोम्यहम्." । इत्युक्त्वा प्राहिणोद्दासीमेकां स द्वाररक्षकः. ॥ ९१४ ॥

तेनैवं कथितं "दासि ! व्रज त्वमनया सह. । प्रासादोपरिभूमिस्थकुमारं नयतादिमाम्." ॥ ९१५ ॥

दास्या साकमहं रत्नमाणिक्यदीपितक्षितेः । प्रासादस्योपरि क्ष्मायां क्षणेनैवागमं मुदा. ॥ ९१६ ॥

तत्र स्थितायाा मे दृष्टिर्दिव्यसंपद्विराजिते । श्रेष्ठिसद्मनि सर्वत्र ह्यभवद्दूरगामिनी. ॥ ९१७ ॥

रत्नसिंहासनासीनं प्राप्तयौवनसम्पदम् । दर्शयित्वा कुमारं सा किङ्करी त्वरिताऽगमत्. ॥ ९१८ ॥

विश्वस्ताऽहं कुमारस्य नातिदूरे स्थिता मुदा. । तत्रैको वाडवश्चासीन्मूढधीः समुपस्थितः. ॥ ९१९ ॥
मुक्तं जानुनि चित्रं तच्छ्रेष्ठिपुत्रो व्यलोकयत्. । नेत्राभ्यां न्यपतन्नश्रु–बिन्दवः फलकोपरि. ॥ ९२० ॥
स तान् न्यमार्जयत्क्षिप्रं पत्रस्थविकृताङ्कवत्. । एवं त्वन्मिलनोत्कण्ठो वियोगचिन्तया स्थितः. ॥ ९२१ ॥
ललाटन्यस्तहस्ताहं प्राणमं तं कुमारकम्. । "चिरं जीव कुमार ! त्वम्"इत्याशीर्वाङ् मयेरिता. ॥ ९२२ ॥
तां निशम्याऽवदन्मूर्खो ब्राह्मणस्त्वीर्ष्ययाकुलः । वक्रदण्डकरश्चण्ड–श्रिभटीबीजदन्तकः ॥ ९२३ ॥
व्याघ्रचर्मोपरि व्यक्त–धृतरक्ताङ्गरक्षकः । बहुभाषी वृथामानी विकरालाङ्गदर्शनः.– ॥ ९२४ ॥
"ब्राह्मणं मां परित्यज्य कथं शूद्रो नमस्कृतः ? । दुर्विनीते त्वया मूढे! प्राग्विरुद्धं कृतं महत्. ॥ ९२५ ॥
तद्भयाद्वलयं हस्तान्मामकादस्खलत्स्रसः ! । भूमौ निपतितेवाहं दण्डवद्विनयान्विता. ॥ ९२६ ॥
"नमामि त्वामिति" प्रोच्य पुनरुत्थाय संस्थिता. । "भुजङ्गमादिव त्वत्तो बिभेमी"त्यवदं ततः– ॥ ९२७ ॥
हुङ्कारं च विधायैष कथयामास मां तदा । "रे दुष्टे ! मां भुजङ्गेति वदन्ति किं न लज्जसे ?" ॥ ९२८ ॥
"न भवान् सर्प" इत्युक्तं मया "विप्रशिरोमणे ! । अथेदानीं भवच्चित्तं सन्तुष्टं किमजायत?" ॥ ९२९ ॥
सोऽवदद्वेपमानोष्ठौ "मामुक्त्वा भुजगं पुरा । व्यलीकं भाषसे दुष्टे ! प्रतारयसि मामपि ? ॥ ९३० ॥
वाडवानां कुले श्रेष्ठे जातं मां सम्प्रधारय. । हारितश्चास्मि गोत्रे. मत्पिता काश्यपाभिधः. ॥ ९३१ ॥
छान्दोग्यसम्प्रदायस्य धुरीणः. सर्वशासनम् । करोम्यहं. न जानासि किमद्यापि मनस्विनि ! ?" ॥ ९३२ ॥

अद्भुतं मद्वचः श्रुत्वा कुमारस्य मुखं तदा । अश्रुप्रवाहतः क्लिन्नं, कम्पते स्म वपुस्तथा. ॥ ९४७ ॥
निजस्नेहस्तु तेनेत्थं दर्शितः श्रेष्ठिसूनुना. । प्रत्युत्तरप्रदानाय न क्षमोऽभूच्च स प्रधीः. ॥ ९४८ ॥
निराशां गोपितुं तेन यच्चित्रमङ्कितं शुभम् । तदश्रुपाततः स्नेहा–दार्द्रीचक्रेऽखिलं पुनः. ॥ ९४९ ॥
काञ्चिच्छान्तिं समासाद्य गृहीतहस्तपत्रकः, । यदैतद्वाचयामास प्रफुल्लाक्षस्तदाऽभवत्. ॥ ९५० ॥
वाक्चातुर्यमयं पत्रं विचार्य शान्तिमासदत्. । विशेषतः स हृष्टात्मा स्पष्टवाचा जगाद माम्– ॥ ९५१ ॥
"अलं वाचां विस्तरेण संक्षेपान्मद्दशां शृणु. । यदि त्वमत्र नागच्छेस्तदा मे मरणं ध्रुवम्. ॥ ९५२ ॥
सुष्ठु त्वदागमोऽद्यैव जातो जानामि साम्प्रतम्. । जीवनस्य रसं लप्स्ये वल्लभायाः समागमात्. ॥ ९५३ ॥
त्वदागमनतश्चैव कामदेवः स्वसायकैः । प्रहारं कुरुते तीव्रैरतिगाढं ममोरसि. ॥ ९५४ ॥
तत्पराजयमाधातुं बलमासादितं मया. । निर्बलस्य सुखं नास्ति कुत्रापि जगतीतले." ॥ ९५५ ॥
ततः स तव चित्रैश्च प्राग्भवं स्मृतवान् हृदि. । तस्य सर्वां कथां मह्यं कथयामास मूलतः. ॥ ९५६ ॥
त्वया च कथितं यन्मे तद्वृत्तान्तं समस्तकम् । अभिन्नमेव भगिनि ! त्वदुक्तं समजायत. ॥ ९५७ ॥
"उद्यानसरसः पार्श्वे भ्रमन्ती चक्रवाककम् । निरीक्ष्य त्वं भवं पूर्वमस्मार्षीः स्नेहबन्धनात्." ॥ ९५८ ॥
इत्यादिका कथा सर्वा तस्याऽग्रे विनिवेदिता. । श्रुता स्थिरेण चित्तेन ! स्वेष्टः कस्य न वल्लभः ? ॥ ९५९ ॥
ततः श्रेष्ठिसुतोऽवादीद् "रे ! रे ! सख्यास्तवोत्तमे ! । चित्राणि वीक्षमाणस्य तीव्राघातोऽजनिष्ट मे. ॥ ९६० ॥

वार्ताश्चान्याः प्रकुर्वाणो मां निरुध्य चिरं ततः । व्यसृजत्सहृत्कुच्छ्रेण तव प्रेमलतां स्मरन् ॥ ९८९ ॥
तत्प्रसादाद्बहिर्यान्त्या मयाऽऽकाशधरातलम् । एकीभूतमिव ज्ञातं स्नेहसम्बन्ध ईदृशः ॥ ९९० ॥
विहाय त्वत्पितुर्हर्म्यं सर्वत्र राजवर्त्मनि । तादृशो नाऽपरो भव्यः प्रासादो दृश्यते महान् ॥ ९९१ ॥
इदानीमपि सा शोभा भव्यता सैव सत्कृतिः । साऽपूर्वा हृदि मे साक्षात् स्फुरत्येव पुनः पुनः ॥ ९९२ ॥
त्वद्वल्लभातिसौन्दर्यमपि चेतोहरं शुभम् । तत्पत्रमधुना तुभ्यं ददामि सुखदायकम् ॥ ९९३ ॥
पत्रेऽस्मिंस्तेन भव्येन स्नेहस्याशा अनेकशः । दर्शिताः स्पष्टभावार्थाः सुधाधारा इव स्फुटाः ॥ ९९४ ॥
तरंगवत्यथ स्वीयां वदति प्राक्तनीं कथाम् । आगतं स्वामिनं साक्षा-दिव हस्ते विधाय तत् ॥ ९९५ ॥
वक्त्रेण चुम्बितं मोदात्पत्रं प्रेमाऽमृताऽऽस्पदम् । मयोत्कण्ठितया शीघ्रं दृढवेष्टनवेष्टितम् ॥ ९९६ ॥
यावत्तदीयमुद्रा मे नेत्रयोः प्रस्फुरत्यलम् । कर्णयोश्च सखीशब्दाः प्रविशन्ति मुहुर्मुहुः ॥ ९९७ ॥
तावदेव मनःक्षेत्रे प्रमोदाङ्कुरराशयः । प्रादुर्भूताः प्रभूता मेऽप्रमेयक्षेमदायकाः ॥ ९९८ ॥
चम्पकस्य यथा पुष्प-दलानां स्फुटनात्परम् । निःसरन्ति बहिस्तन्तु-राशयश्चित्तमोहकाः ॥ ९९९ ॥
मुद्रामुत्सार्य तत्पत्रं वाचितुं सस्पृहाऽभवम् । मन्मृत्युमन्तरा सर्वं पूर्वजन्मकथानकम् ॥ १००० ॥
वर्णितं तेन सम्पूर्णं चमत्कारकरं भृशम् । यावत्सहावसाव द्वौ तावत्सर्वं हि निश्चितम् ॥ १००१ ॥
मन्मृत्योश्च कथान्त्वेष नाज्ञासीत्करुणालयः । आनन्दोल्लसितेनाहं हृदयेन रसप्लुता ॥ १००२ ॥

प्रेषितं तेन तत्पत्रं वाचितुं प्रारभे मुदा । यादृशी मे मनोऽवस्था तस्यापि तादृशी खलु ॥ १००३ ॥
एतत्तेनैव भव्योक्त्या वर्णितं सुन्दरं शुभम् । पत्रस्य वाचनात्तस्य स्नेहः स्पष्टोऽभवत्तदा ॥ १००४ ॥
पत्रस्थितं तु यद्वृत्तं तदेव भृणुताऽधुना । मन्मनःस्नेहसत्पात्रं तरङ्गवत्यनिन्द्यधीः ॥ १००५ ॥
सन्देशोऽयं समादिष्टस्तस्याः शान्तिकृतेऽखिलः । आशापाशनिबद्धाया जातपूर्वभवस्मृतेः ॥ १००६ ॥
विकसत्कमलाकार–वदना चित्तजेषुभिः । क्षीणदेहा च या जाता तस्या मङ्गलमस्त्वलम् ॥ १००७ ॥
आवां स्नेहेन संबद्धौ येन संरक्षितौ मृतेः । कृपया तस्य कामस्य सर्वथा कुशलोऽस्म्यहम् ॥ १००८ ॥
केवलं कामबाणेन विद्धोऽस्मि तेन हेतुना । यावत्त्वं दूरदेशस्था तावन्मे निर्मलंन्नो नीपुजंः वपुः ॥ १००९ ॥
कुशलोदन्तमाकर्ण्य कमलाक्षि ! प्रिये ! तव । कथयाम्यपरां वार्त्तां भृणु त्वं सुसमाहिता ॥ १०१० ॥
आवयोः स्नेहसम्बन्धाऽऽ–नन्दं भूयः स्मरम्यहम् । इदानीमपि मग्नोऽस्मि त्वदीयकामनाजले ॥ १०११ ॥
सम्बन्धिनाञ्च मित्राणां साहाय्येन सुलक्षणे ! । आवर्जयाम्यहं याव–न्नगरश्रेष्ठिनो मनः ॥ १०१२ ॥
तावत्त्वं धैर्यमाधेहि निजतातेच्छया प्रिये ! । समीहितं शुभं सर्वं सिद्ध्यतीष्टप्रसादतः ॥ १०१३ ॥
तत्तु पत्रं प्रवाच्यैतं मया ज्ञातं तदा द्वयोः । मत्प्रियेणान्तरस्नेहो याथातथ्येन वर्णितः ॥ १०१४ ॥
तथापि धीरताधान–सूचनेन स मत्प्रियः । मन्दस्नेहोऽधुना जातो जानेऽहमिति निश्चितम् ॥ १०१५ ॥
उत्साहोत्कलिके नष्टे मदीये तेन तत्क्षणात् । शिथिलीभूय जङ्घायां विनिवेशितकूर्परा ॥ १०१६ ॥

मुखं निधाय हस्ताब्जे निर्निमेषविलोचना । शून्यं निरीक्षणं चक्रे गृहकार्यपराङ्मुखी ॥ १०१७ ॥
वयस्याऽसान्त्वयन् माञ्च समादरपुरःसरम् । सखि ! त्वत्कामनासिद्धिश्चिरकालसमर्थिता ॥ १०१८ ॥
अवश्यं माविनी भद्रे ! नैव चिन्ताप्रयोजनम् । वृथा चिन्ताविधानेन किं फलं लभते ? नरः ॥ १०१९ ॥
युवयोः स्नेहसम्बन्धः पत्रेण सूच्यते पुनः । तेनैव तव शोकाग्निं निर्वापय महामते ! ॥ १०२० ॥
वचोऽमृतेन ते भर्तुः शोकजन्तुर्लयं गतः । मुदं करिष्यति क्षान्ति–मचिराच्च जनिष्यति ॥ १०२१ ॥
विषादो नैव कर्तव्यस्त्वया चेतोविदाहकः । अचिरेण निजस्वामि–संयोगस्ते भविष्यति ॥ १०२२ ॥
मया सखीवचः श्रुत्वा प्रतिवाक्यं समीरितम् । जानेऽहं दूरवासेन मन्दस्नेहो भवेत्सखि ! ॥ १०२३ ॥
अतोऽस्माकं बत स्नेह–संगतिरायतौ स्थिरा । न भविष्यति मन्येऽहं सर्व–कालविनिर्मितम् ॥ १०२४ ॥
कृताञ्जलिः पुनः शान्त्यै प्रत्यवोचत्सखी मम । भद्रे ! त्वं निश्चितं विद्धि यथार्थं कथयाम्यहम् ॥ १०२५ ॥
वीराः साधयितुं साध्यं निजं यत्नं प्रकुर्वते । व्यवस्थाञ्च यथाकालं वितन्वन्त्यप्रमादतः ॥ १०२६ ॥
साधनानाममावे हि योग्यानां वीरपुरुषाः । जघन्यमार्गमाश्रित्य न कुर्वन्ति मनीषितम् ॥ १०२७ ॥
येन केनाप्युपायेन कार्यसिद्धिर्न शोमना । सहसा कार्यनिर्मातुः कटुकं जायते फलम् ॥ १०२८ ॥
अविचार्यकृतं कर्म परिणामेऽसुखप्रदम् । योग्यसाधनसत्त्वे हि कार्यसिद्धिः प्रजायते ॥ १०२९ ॥
साधने सति योग्येऽपि यदि कार्यं निजेप्सितम् । न सिद्ध्यति तदा पुंसां नैव दोषोऽभिधीयते ॥ १०३० ॥

अतो वीरजना विद्धाः कामबाणैर्निरर्गलम् । तथाप्यसत्प्रचाराश्नो दूषयन्ति निजं कुलम् ॥ १०३१ ॥
वरं दौस्थ्यं लोके वरमपि च मानस्य विलयः । वरं ग्रामे ग्रामे पथि पथि च निन्दा शतमुखी
वरं देशत्यागो वरमपि वियोगः स्वसुहृदां, । कुकृत्यैः प्राणानामवनमपि पुंसामनुचितम् ॥ १०३२ ॥
कुलीनाः स्वकुलाचारं सत्यवर्त्मनि संस्थिताः । पालयन्ति महाऽऽपद्भिः पीडिता अपि सर्वदा ॥ १०३३ ॥
इत्थं सख्यां वदन्त्यां मे पद्मबन्धुर्विभावसुः । न्यमज्जत्सरितां पत्यौ न ज्ञातं तदिदं मया ॥ १०३४ ॥
ततः शीघ्रतरं स्नानं विधाय शुद्धिहेतवे । सख्या साकं मया भुक्तं किञ्चित्पक्वान्नमस्पृहम् ॥ १०३५ ॥
ततः सख्या तया सार्द्धं चन्द्रशालां मनोरमाम् । समारुह्योपविष्टाऽहं रम्यमालम्ब्य विष्टरम् ॥ १०३६ ॥
ततो मुदा मया वार्ता मद्धर्तुर्विहिता चिरम् । कालो यथा यथाऽगच्छ–त्तथाऽशान्तिरवर्द्धत ॥ १०३७ ॥
असह्या साऽभवत्पीडा मनोवल्लिविशोषिणी । संपत्तौ विद्यमानायामपि निःस्वसमाऽभवम् ॥ १०३८ ॥
स्नेहप्राबल्यतो भूरि–पीडया व्यथिता सखीम् । जीवनं रक्षितुं नम्रा प्रावोचं वचनं ह्यदः ॥ १०३९ ॥
कुमुदानां समुल्लासं कुर्वंश्चन्द्रो यथा यथा । नभोङ्गणं समायाति तथोत्कण्ठा विवर्द्धते ॥ १०४० ॥
पवनस्य बलेनेव कुशाग्रस्थगितोदकम् । मदुत्कण्ठाबलेनैषा नश्यति मिष्टवाक्कृवत ॥ १०४१ ॥
मन्मानसाभिरानन्दात्सखि ! त्वं शरणं मम । किं करोमि ? क्व गच्छामि ? दुःखस्यान्तः कथं मम ? ॥ १०४२ ॥
मदीयं मानसं तस्य पृष्ठे भ्राम्यति सस्पृहम् । इदानीमेव सान्निध्यं तस्य प्रापय मां स्वसः ! ॥ १०४३ ॥

प्राग्भवे मम भर्त्ताऽसीत् स श्रेष्ठिप्रभुरङ्कुतः । स्नेहवेद्यामहं लज्जा-होमं कुर्वे विधानतः ॥ १०४४ ॥
वयस्या प्रत्यवोचन्मां स्वकुलाचारपद्धतिः । पालनीया त्वया भद्रे ! मार्गोऽयं कुलयोषिताम् ॥ १०४५ ॥
ईदृशं साहसं कर्तुं न त्वं योग्याऽसि साम्प्रतम् । तस्मै विशुद्धवंशाय कलङ्कं दातुमुद्यता ॥ १०४६ ॥
स तवाऽस्ति त्वमेतस्य जातासि भगिनि ध्रुवम् । अधुना सङ्कटं नैव त्वया धार्यं स्वचेतसि ॥ १०४७ ॥
पितरौ तव सौख्याय त्वन्मतं मानयिष्यतः । दुःखितां स्वसुतां दृष्ट्वा मातापित्रोः सुखं कुतः ? ॥ १०४८ ॥
बहुधा वनिताजातिः संवेशवशतां गता । कदाग्रहग्रहग्रस्ता कुरुते हि निजेप्सितम् ॥ १०४९ ॥
एवमेव ममाप्यासी-दुन्मार्गगमनस्पृहा । ततः सख्युपदेशेऽपि विवेकधीरनश्यत ॥ १०५० ॥
ततोऽहं स्नेहसम्बद्धा केवलं व्यग्रमानसा । विवेकविधुराऽवोचं सारसिकां सखीं प्रति ॥ १०५१ ॥
मानवैः सर्वकार्याणि दुःसाध्यान्यपि बुद्धितः । विधातुमुद्यमःकार्यो स्वेष्टसिद्धिविधित्सुभिः ॥ १०५२ ॥
विघ्नैरुपहतस्तत्र तेभ्यो नैव बिभेति यः । स जयं लभते नूनं दुःसाध्येष्वपि कर्मसु ॥ १०५३ ॥
प्रारब्धमपि यत्कार्यं विषमं स्यात्तथापि तत् । सुकरं साहसान्नूनं तस्मात्साहसमाचरेत् ॥ १०५४ ॥
तादृश्येव मदुत्कण्ठा वर्तते भर्तृसन्निधौ । यदि मां न नयेस्तर्हि मृतामेवाशु द्रक्ष्यसि ॥ १०५५ ॥
पञ्चेषुबाणजालेन कदर्थीकृतचेतसम् । वियोगव्यथितां जात-पूर्वसंस्कारसंस्मृतिम् ॥ १०५६ ॥
समयो न वृथा हेयो निजेहिभूतिमिच्छता । मां तत्र नय सद्यो हि मा विलम्बं कुरु स्वसः ? ॥ १०५७ ॥

जीवितां द्रष्टुमिच्छा चेन्मां तदा कुरु शीघ्रताम् । विवेकं सम्परित्यज्य सख्यं जानामि तर्हि ते ॥ १०५८ ॥
तथाऽऽग्रहेण मच्चेतः-प्रमोदाय सखी मम । मया सार्कं गृहं गन्तुं स्वामिनः प्रत्यपद्यत ॥ १०५९ ॥
कामदेवधनुर्भूतं वेषञ्च पर्यधारयम् । सद्योऽनङ्गविवृद्ध्यर्थं प्रमोदेन समन्विता ॥ १०६० ॥
प्रफुल्ले नयने जातेऽद्भुततेजोविराजिते। यतः प्रियालयं पादौ गन्तुमुत्कण्ठितौ भृशम् ॥ १०६१ ॥
हृदयन्तु ममोन्मत्तमिव ग्रहिलतां गतम् । पुरैव प्राचलच्छीघ्रं प्रियप्रासादमीक्षितुम् ॥ १०६२ ॥
अथावां वेपमानाङ्ग्यौ परस्परकरग्रहम् । विधाय पश्चिमद्वारोच्चलिते निजवेश्मतः ॥ १०६३ ॥
कौशाम्बीं तुलितस्वर्गां भूषयन्तं सुविस्तृतम् । राजमार्गं समागत्य विपणीं प्राप्नुवाद्भुताम् ॥ १०६४ ॥
पुष्पमालामिवाऽत्यन्तं रमणीयां सुविस्तराम् । विलोकितुं कथं शक्ता भवेयं विरहाऽर्दिता ॥ १०६५ ॥
सद्विचाराऽस्तु पत्यौ मे स्थिरा एव च पूर्वतः । अद्यैव मत्पतेर्भावि दर्शनं सुखदायकम् ॥ १०६६ ॥
इत्थं विचारणाचित्ते मदीयेऽभूत्पुनः पुनः । तस्माच्छ्रमो न विज्ञातो प्रयाणजनितस्तदा ॥ १०६७ ॥
संकीर्णेऽपि जनैर्मार्गे गमनागमनोद्यतैः । सख्या समं व्रजन्ती च त्वरया भृशपीडिता ॥ १०६८ ॥
प्रासादं स्नेहसद्धाम तोरणालीविभूषितम् । श्रेष्ठिनः श्रेष्ठशोभाढ्यं सम्प्राप्ता मुदिताऽऽनना ॥ १०६९ ॥
सारसिका सखी तावन्मित्रमण्डलसंस्थितम् । मां प्रियं दर्शयामास गोपुरस्योपरि गृहे ॥ १०७० ॥
शरच्चन्द्र इवाऽनल्पं प्रकाशं वितरन्निजम् । अवादयद्वल्लकीं स तदानीं चित्तहारिणीम् ॥ १०७१ ॥

निश्चलावयवाऽहन्तुं स्थिरदृष्ट्या न्यभालयम् । तं मनोवल्लभं प्रेम्णा नेत्रतृप्तिस्तु नाऽभवत् ॥ १०७२ ॥
लोचनेऽश्रुप्रवाहेण पूरिते भवतां मुहुः । हृदयन्तु तदानीं हि तन्मयं समजायत ॥ १०७३ ॥
चक्रवाकभवस्वामी मया दृष्टो यथा यथा । तथा तथा मदुत्कण्ठाऽ, वर्द्धत तद्विलोकने ॥ १०७४ ॥
तस्यापि दृष्टिपातोऽभूदावयोर्हर्षवर्द्धनः । एवमप्यतुलोत्साहे भर्तुरावां समुत्सुके ॥ १०७५ ॥
नातिदूरे स्थिते तत्र ह्रिया न निकटं गते । विसृष्टाः सुहृदस्तेन क्षणे तस्मिन्सुदैवतः ॥ १०७६ ॥
यूयं व्रजत मित्राणि ! शरच्चन्द्रस्य तेजसि । प्रमोदध्वमहं रात्रौ शयिष्येऽत्र वरासने ॥ १०७७ ॥
गतेषु तेषु मित्रेषु तत्क्षणं मत्सखिमभि । निरीक्ष्य श्रेष्ठिसूनुः स स्नेहदृष्ट्याऽवदत् सुधीः ॥ १०७८ ॥
आगच्छ नगरश्रेष्ठि-गृहे मुक्तानि यानि वै । तानि चित्राणि सर्वाणि वयं वीक्षामहे रहः ॥ १०७९ ॥
तस्मिन्नेवं ब्रुवाणेऽहं भूषणानि यथाऽऽस्पदम् । वासांसि च यथास्थानमकार्षं मुदिताऽऽनना ॥ १०८० ॥
सत्स्वामिलाभमत्ताऽहं कामदेवमिवाऽपरम् । मत्प्रियं प्रेमसत्पात्रं मनोहृत्य व्यलोकयम् ॥ १०८१ ॥
विवेकविनयोपेता साऽगच्छत्तस्य सन्निधौ । तदानीमेव स क्षिप्रमुदतिष्ठत्ससमादरात् ॥ १०८२ ॥
यस्मिन् स्थले सलज्जाऽहं व्याकुला च स्थिता रहः । तस्मिन्नेवाऽऽगतः सख्या सुरम्ये गृहखण्डके ॥ १०८३ ॥
ततः स मोदमापन्नश्चक्षुषा स्नेहवर्षिणा । परितो वीक्षमाणः समपृच्छत्तां निजेप्सितम् ॥ १०८४ ॥
मज्जीवितसरःपोषं कुर्वती मत्सुखप्रदा । मच्चेतोऽभीष्टराज्ञी सा कुशला वर्तते शुभे ? ॥ १०८५ ॥

यदारभ्य शरापातैर्विद्धोऽनङ्गस्य मीलितुम् । ताश्चोत्सुकमना नास्ति ततः किञ्चित्सुखं मम ॥ १०८६ ॥
शरभिषि रमध्वं हि मां तु निद्रा प्रबाधते । इति च्छलेन मित्राणि व्यसृजं स्वैरकाम्यया ॥ १०८७ ॥
तत्तु नैपुण्यमात्रं मे निबोध हितदायिनि ! । अभिप्रायो ममैवासीद्वस्तुतस्तद्विसर्जने ॥ १०८८ ॥
युष्मत्प्रासादमासाद्य यथेच्छं क्रीडनेच्छया । चित्राण्यालोकितुं चैव मया चेतोहराणि वै ॥ १०८९ ॥
तथापि दर्शनेनैव तव भद्राशये मम । समुद्भूतप्रमोदेन शोको नष्टोऽतिहार्दिकः ॥ १०९० ॥
वद त्वं वल्लभाया मे वाचिकं किं त्वयाऽऽहृतम् । कुशलोदन्तमावेद्य प्रसन्नं कुरु मानसम् ॥ १०९१ ॥
सख्यवादीन्न सन्देश-वचनं किञ्चिदाहृतम् । त्वन्मनोऽभीष्टदा-सैव स्वयमत्र समागता ॥ १०९२ ॥
पुनः साऽप्यब्रवीद्वाक्यं सख्यास्तु कुशल परम् । तथैषा स्नेहमूढाऽस्ति तत्पाणिग्रहणं त्वया ॥ १०९३ ॥
कर्तव्यमेव तत्क्षेम-मिच्छता प्रेमधारिणा । अविभमित्राऽऽपगा स्नेहा-दागता या त्वदन्तिकम् ॥ १०९४ ॥
इति वाक्यामृतं पीत्वा सकलं मामकं वपुः । स्वेदबिन्दुसमाकीर्णं बभूव प्रेमसंभृतम् ॥ १०९५ ॥
निःसहा विनयाऽऽनम्रा प्रमोदाश्रुप्लुताऽक्षिका । व्याकुला वेपमाना च प्राणमं स्वामिनः क्रमौ ॥ १०९६ ॥
क्षिप्रमेव सुरम्येण करेण स्नेहपूर्वकम् । उत्थाप्याऽहं समाश्लिष्टा वक्षसा स्वेन भूरिशः ॥ १०९७ ॥
तस्यापि नेत्रयोरश्रुप्रवाहश्चावहन्मुदा । सोऽवादीच्छोकसंहत्रि ! केल्याणं सखि तेऽस्तुवै ॥ १०९८ ॥
ततो मामेकदृष्ट्यैवाऽ-पश्यदानन्दिताऽऽननः । तन्मुखं कमलमाष्ट रमयेव कंजवासेव कंजभिमा मयेक्ष्यत ॥ १०९९ ॥

लज्जयाऽवनताऽहन्तु मौनमाधाय संस्थिता । आनन्दजलकल्लोल–निमग्ना चञ्चलक्रमा ॥ ११०० ॥
कटाक्षलेशतस्तस्याऽ पश्यं वीक्षणलालसा । स मां व्यलोकयद्धीमां–स्तदा नम्राननाऽभवम् ॥ ११०१ ॥
विलासभङ्गिभी रम्यं स्वरूपं तस्य चाद्भुतम् । मोहकं येन मच्चित्तं मग्नं मोहपयोनिधौ ॥ ११०२ ॥
ममाहो ! हृदयक्षेत्रे तद्दृष्टिमेघवर्षणम् । सुखनीरप्रदं जातं स्फुटिताश्च मुदङ्कुराः ॥ ११०३ ॥
ततः सोऽवक् शुभाङ्गि ! त्वं कर्मैतत्साहसं कथम् । विधातुं शक्तिमत्यासीः सर्वापत्तिप्रदायकम् ? ॥ ११०४ ॥
त्वदीयजनकस्यैव मनो यावन्न मन्यते । तावत्प्रतीक्षितव्यं ते पुरैव कथितं मया ॥ ११०५ ॥
त्वत्पिता राजलोकानां मान्योऽस्तीभ्यजनाग्रणीः । सुहृन्मण्डलमध्ये च प्रभूतस्तत्समादरः ॥ ११०६ ॥
स्वैराऽऽचरणमेतत्ते तदिच्छाप्रतिकूलताम् । गमिष्यति तदात्वेष उपायान्योजयिष्यति ॥ ११०७ ॥
इद्धकोपश्च सकलं कुटुम्बं मे हनिष्यति ? । अतः स्वीकृत्य मे वाचं स्वगृहं याहि सत्वरम् ॥ ११०८ ॥
त्वत्प्राप्तये यतिष्येऽहं सदुपायैः सुलोचने ? । अस्मत्समागमो गुप्तः कथं जायेत सर्वथा ? ॥ ११०९ ॥
सुगुप्तमपि जानाति कार्यं नैपुण्यतो जनः । त्वत्पिता तु विशेषेण सर्वकार्यविचक्षणः ॥ १११० ॥
यतो गूढतरं कर्म विहितं बुद्धिमान्नरः । वेत्त्येव रक्षितं चापि गुह्ये यस्तर्कवान्नरः ॥ ११११ ॥
मद्भर्तरीति वदति तदानीं स्वविकल्पतः । तस्मिन् राजपथे गच्छन् कश्चिदेवमभाषत ॥ १११२ ॥
योषितं स्वेच्छया प्राप्तां यौवनश्चार्थसम्पदम् । राजलक्ष्मीं तथा वर्षां मित्रानन्दञ्च कौमुदीम् ॥ १११३ ॥

उपभुङ्क्ते न यो मूढः स स्वयं गृहमागताम् । लक्ष्मीं साक्षात्तिरस्कृत्य तत्प्रभावं न बोधति ॥ १११४ ॥
सर्वस्वं जीवितस्येव प्रियां रम्यां समागताम् । यो जहाति नरस्तस्य न सिद्ध्यति मनोरथः ॥ १११५ ॥
एतद्वचनमाकर्ण्य मत्प्रियो मामचीकथत् । यदि देशान्तरं यावस्तदा निर्विघ्नता भवेत् ॥ १११६ ॥
निःशङ्कं मोदमापन्नौ सुखितौ च यथेच्छया । तदैवाऽऽवां भविष्यावो नान्योपायोऽस्ति कामिनि ! ॥ १११७ ॥
अपि च—

शृणु सखि ! विषयान्तरभ्रमिर्वै गुणचयमीप्सितमावहत्यवश्यम् ।
जनयति जनतां कलाप्रवीणां वितरति भाग्यपरीक्षणप्रसङ्गम् ॥ १११८ ॥

अवगणयति दुष्टवाक्प्रपञ्चं वपुरपि कष्टसहं दृढं तनोति ।
दिशति हि सदसद्विवेकबुद्धिं नयति च नेत्रपथं सुभूमिभागान् ॥ १११९ ॥

मयोक्तश्च प्रियस्वामिन् ! स्वगृहं भाति दुःखदम् । त्वं गमिष्यसि यत्राऽह-मागमिष्यामि तत्र वै ॥ ११२० ॥
स्वमतेर्दार्ढ्यविक्षायै वेनाऽनेकविधोक्तयः । विहिता मत्पुरः सम्य-गिच्छन्तीं तस्य सन्निधिम् ॥ ११२१ ॥
निश्चयो मे दृढो जातस्तदा सोऽकथयन्मुदा । देशान्तरमिदानीं वै गन्तव्यं पङ्कजानने ! ॥ ११२२ ॥
क्षणं तिष्ठाऽध्वनीनानि साधनानि चिनोम्यहम् । पक्षहीनो यथा पक्षी ना तथा साधनैर्विना ॥ ११२३ ॥
इत्युक्त्वोचितवस्तूनि सज्जीकर्तुं स सत्वरम् । प्रासादाऽभ्यन्तरं प्राप निजकार्यचिकीर्षकः ॥ ११२४ ॥

तथाऽपि प्रेषिताऽऽनेतुं भूषणानि गृहं प्रति. । मत्सखी सहसाधावन्त्यगमत्कर्मकोविदा ॥ ११२५ ॥
तावदेव मम स्वामी गृहीतधनसञ्चयः । समागत्य च मामूचे प्रयाणे शीघ्रतां कुरु ॥ ११२६ ॥
समयो याति भद्रेऽयं विलम्बोऽनर्थदायकः । यावच्छ्रेष्ठी न जानाति गमनं तावदिष्टदम् ॥ ११२७ ॥
व्याकुला च ततोऽवोच-म्भूषणाऽऽनयनाय मे । गताऽऽयाति सखी यावत् तिष्ठ तावदधीश्वर ! ॥ ११२८ ॥
सोऽवादीन्नीतिशास्त्रेषु निर्दिष्टं दौत्यकारिणी । पराभवप्रदायित्री न तु कार्यप्रसाधिका ॥ ११२९ ॥
प्रत्युताऽर्थविघाताय जायते नैव संशयः । गुप्तवार्त्ता सदा दूत्यै कथनीया न कोविदैः ॥ ११३० ॥
सद्यः सा कार्यसंहर्त्री बुद्धिमन्तमपि क्षणात् । अनर्थे पातयत्यद्धा तस्माद् गोप्ये न सा हिता ॥ ११३१ ॥
तथैव भूषणौघेऽपि चौरदृष्टिः पतेद्द्रुतम् । प्रतीक्षायां ततो मार्ग-प्रयाणे विघ्नमापतेत् ॥ ११३२ ॥
तथैव शान्तिभङ्गश्च सर्वथैव भविष्यति । अतस्तत्संगतिस्त्याज्या परिणामेऽतिदुःखदा ॥ ११३३ ॥
द्रविणाऽभावजं कष्टं नैव धार्यं यतोऽधुना । महार्घं मणिरत्नादि गृहीतं सुखदायकम् ॥ ११३४ ॥
यदपेक्षिष्यते वस्तु तत्तेनाऽऽनेष्यते प्रिये !। तस्मात्सुभ्रु ! समायाहि व्रजामो निजवर्त्मनि ॥ ११३५ ॥
प्रियोक्तिं तां समाकर्ण्य तथा कर्तुं समुद्यता । निजेष्टसिद्धिकामेन न प्रतीक्ष्य सखीं ततः ॥ ११३६ ॥
मार्गमुद्दिश्य विहितं प्रयाणं सावधानतः । निश्यपि गोपुरद्वारमास्तेऽपावृतमन्वहम् ॥ ११३७ ॥

तस्मादावां विनिर्गत्य यमुनातटमागतौ । तत्रैका द्रोणिका दृष्टा रज्वा बद्धा च कीलके ॥ ११३८ ॥
सद्भाग्येनाऽऽवयोस्तस्यां जलं न प्राविशद्धत । सज्जीकृत्य ततो द्रोणीमारूढौ त्वरया दृढाम् ॥ ११३९ ॥
मद्भर्ता द्रविणग्रन्थिं संस्थाप्य क्षिपणीकरः । कालीयं यमुनाञ्चापि नत्वाऽस्तौषीत्समादरात् ॥ ११४० ॥
ततः समुद्रगायाञ्च तस्यां द्रोणी प्रवाहिता । मत्प्रियेण मया सार्द्धं देशान्तरयियासया ॥ ११४१ ॥
आवयोर्दक्षिणे भागे शृगाला ध्वनिमुत्कटम् । वितेनुर्विरसं चेतस्ततो भ्राम्यन्मयादित्र ॥ ११४२ ॥
धूर्तानां पशुमध्ये तु तेषां शब्दः श्रुतः खरः । आवाभ्यां हितमिच्छद्भयां कर्णयोः काकवत्कटुः ॥ ११४३ ॥
स्तम्भयित्वा प्लवं भर्ता मामवोचत तत्क्षणम् । शकुनं सम्प्रजायेत शुभं तावत्स्थितिर्वरा ॥ ११४४ ॥
वामतो दक्षिणे याति शृगालश्चेच्च पृष्ठतः । तथैवाऽऽगच्छति ब्रूतेऽशस्तं तच्छकुनं मतम् ॥ ११४५ ॥
यथाऽऽरोग्यं शरीरे स्या-न्निर्विघ्नं जीवनं भवेत् । यतितव्यं तथा विज्ञैर्निजसिद्धिमभीप्सुभिः ॥ ११४६ ॥
सम्यक्परीक्षितव्यञ्च प्रारब्धं कर्मकोविदैः । विधिना क्रियमाणं तत् सफलं जायतेऽनिशम् ॥ ११४७ ॥
शकुनाऽपेक्षया चैव-मुक्तवानपि स द्रुतम् । तरङ्गप्रबलाऽऽघात-भङ्गभीतो विषण्णधीः ॥ ११४८ ॥
ततः संस्तम्भितां द्रोणीं चालयामास वेगतः । कल्लोलभङ्गभीतेव साऽपि शीघ्रगतिं व्यधात् ॥ ११४९ ॥
तरङ्गाणां समूहेन वाह्यमाना मरुद्गतिः । चचाल बहुवेगेन द्रोण्यस्माकं नदीगता ॥ ११५० ॥

अग्रतो गच्छतोर्नद्यामावयोर्दूर वर्तिनः । अदृश्यन्त नवा वृक्षाः पश्चात्तेऽदृश्यतामगुः ॥ ११५१ ॥

मरुतो मन्दतां मेजु–विहगा मौनमादधुः । तस्मात्सा यमुना शान्ति भजन्तीव व्यलोक्यत ॥ ११५२ ॥

मत्प्रियः स ततो नूनं भयचिन्ते गतेऽधुना । इत्थं निश्चित्य मत्सार्द्धं वार्तां कर्तुं समुद्यतः ॥ ११५३ ॥

स चाऽवादीद्विशालाक्षि ! चिरं वियोगसेविनोः । संजात आवयोर्योगः सद्भाग्यं तत्तु केवलम् ॥ ११५४ ॥

त्वयाऽऽवयोर्न संयोगो वाञ्छितश्चेद् वरानने ! । चित्राण्यपि भवेयुर्नो तर्ह्यस्मत्सङ्गतिः कुतः ! ॥ ११५५ ॥

यतोऽस्मदीयरूपाणि सन्ति नो पूर्वजन्मनः । विपरीतस्वरूपाभ्यामावाभ्यां जातमत्र हि ॥ ११५६ ॥

मत्प्रिये ! चित्रितैश्चित्रैस्त्वया सन्दर्शिता मम । स्नेहजीवनयोः सेवा महतीनां यदीदृशी ॥ ११५७ ॥

एतादृशानि वाक्यानि श्रोत्रचेतोहराणि हि । स प्रेमसागरे मग्नो जगाद मम नैकधा ॥ ११५८ ॥

तुर्ष्णीभूय स्थिताऽहन्तु रोमाञ्चितकलेवरा । लज्जयाऽधोमुखी वक्र–दृष्ट्या तं प्रैक्षिषि प्रियम् ॥ ११५९ ॥

रुद्धकण्ठीव सञ्जाता सिद्धयत्प्रेमाऽवगम्य च । स्नेहेन कम्पमानाऽन्तः–करणा मुदिताऽऽनना ॥ ११६० ॥

निजां सद्भावनां स्पष्टी–कर्तुं द्रोण्या मुहुर्मुहुः । ह्रियाऽङ्गुष्ठेन संस्पृश्य फलकमवदं वचः ॥ ११६१ ॥

प्रिय ! त्वामीश्वरं मन्ये समये सुखदुःखयोः । त्वत्सङ्गं न विमोक्ष्यामि निबद्धाऽस्मि त्वया सह ॥ ११६२ ॥

सर्वथा प्रार्थयाम्येतद्–विषमायां स्थितावपि । एकाकिनी विमोच्याऽहं भवता न कदाचन ॥ ११६३ ॥

विषमेऽपि स्थलेऽहन्तु स्थास्यामि भवता सह । तदेवाऽऽचरणं स्त्रीणां परमोन्नतिकारकम् ॥ ११६४ ॥
लभेय नैव चेदन्नं तदा दुखं न मे हृदि । किन्तु तव वियोगे न स्थास्यामि त्वां विना क्षणम् ॥ ११६५ ॥
निजमानसचाञ्चल्यं प्रादुष्कुर्वंदलं मम । समाकर्ण्य वचो हृद्यं मामुवाच स धैर्यतः ॥ ११६६ ॥
प्रिये ! त्वं कुरु नो चिन्तां न ते दुःखं भविष्यति । किञ्चिदपि व्यलीकं ते विधातुं कः क्षमः क्षितौ ? ॥ ११६७ ॥
वेगवत्यां शरन्नद्यां पश्याऽनुकूलवायुना । गच्छतोरावयोरग्रे ' काकन्दी, निकटेऽधुना ॥ ११६८ ॥
सुधाधवलिता एते प्रासादा रम्यकान्तयः । दृश्यन्ते तत्र मे तात-स्वसुः सद्माऽस्ति वल्लभे ! ॥ ११६९ ॥
तत्प्रासादे गमिष्यावः सत्कारस्तत्र चाऽऽवयोः । भविष्यति यथा स्वर्गे निश्चिन्ता स्थास्यसि ध्रुवम् ॥ ११७० ॥
सुखस्य वर्द्धयित्री त्वं दुःखस्य परिहारिणी । मज्जीवनस्य सर्वस्वं मद्वंशवृद्धिकारिणी ॥ ११७१ ॥
एवं ब्रुवंश्चक्रवाक-भवं स्मृत्वा स मां मुदा । आलिलिङ्ग सुखस्पर्शं कोमलावयवैः शुभैः ॥ ११७२ ॥
ग्रीष्मतप्तधरा वृष्टि-पातेनेवाहऽमद्भुतम् । अनुभूतवती भर्तु-रानन्दं स्पर्शनेन वै ॥ ११७३ ॥
ततो मानवभोगानां प्रापकेण गरीयसा । गान्धर्वेण विवाहेन सम्बन्धः स्वीकृतो मिथः ॥ ११७४ ॥
देवानां प्रार्थनां कृत्वा मद्भर्त्रा यौवनं मम । स्वीकृतमुपभोगाय पाणिपीडनकर्मणि ॥ ११७५ ॥
परस्परं मनस्तृप्ति यावद्दाम्पत्यसम्भवः । उपभुक्तो मया सौख्य-विलासः स्वामिना सह ॥ ११७६ ॥

तावदस्मत्प्लवो गच्छन् गङ्गाम्प्रापदनुक्रमात् । रङ्गत्तरङ्गमालाभिर्विराजन्तीमनुद्धताम् ॥ ११७७ ॥
प्रागभवे चक्रवाकस्य नद्यामस्यां युगं यथा । तरतिस्म तथेदानीमतरत् स्नेहिनोर्युगम् ॥ ११७८ ॥
भ्राजल्ललाटशुभ्रांशुः सितज्योत्स्नाम्बराऽऽवृता । तारकालङ्कृता रात्रि–युवतिर्व्यगमच्छनैः ॥ ११७९ ॥
ततः परं शशाङ्कोऽपि पृथिवीवारिदर्पणे । क्षीणतेजा इव प्रेम्णा बिम्बते स्म तरन्निव ॥ ११८० ॥
चतुर्भिर्यामिकै रात्रेस्तावत्कालनियन्त्रितः । तदानीं खण्डितो ह्युच्चैः विच्छाय स व्यलोक्यत ॥ ११८१ ॥
विभाते विहगानाञ्च वृन्दं निद्रां समत्यजत् । तेषां गानस्वरेणैव सरित्सम्बन्धवानिव ॥ ११८२ ॥
अन्धकाररिपुर्भानुर्मानवोद्योगहेतवे । प्रकाशयन्नमोदीव इव प्रापोदयं ततः युग्मम् ॥ ११८३ ॥
गङ्गाया वहमानेषु नौकायां शीतवारिषु । व्रजन्त्यां मत्प्रियोऽवोचन्मां कियत्कालतःपरम् ॥ ११८४ ॥ चौराणामाक्रमणम्
पङ्कजाक्षि ! दिवानाथः पूर्वाद्रिसानु चाऽऽगत : दन्तशुद्धिविधानस्य जातोऽस्ति समयोऽधुना ॥ ११८५ ॥
ततो दक्षिणदेशेऽत्र शङ्खवच्छ्वेतसैकतः । दृश्यते रुचिरस्तत्र निवासः क्रियतेऽधुना ॥ ११८६ ॥
तत्र गत्वा च तेनाऽस्मद्-द्रोणिका स्थापिता रहः । उत्तीर्याऽधः कृतोऽस्माभिर्निवासो निर्भयस्थले ॥ ११८७ ॥
निर्मानुषे तटे तस्मिन् सिकताप्रचुरे च नौ । परिभ्रमणमाधातुं प्रवृत्तं भृशमुत्सुकम् ॥ ११८८ ॥
यावद्रम्यतरा भूमिर्दूरदृष्ट्या गवेष्यते । निःशङ्कस्थानतस्ताव–द्दृश्यन्त च लुण्टकाः ॥ ११८९ ॥

लताजालादकस्मात्ते यमदूतसहोदराः । निर्गत्य धावमानाश्चा–सत्समीपं समागमन् ॥ ११९० ॥
भयादहन्तु पूत्कारं कृत्वाऽस्मिन्सङ्कटे हहा ! । कथं भविष्यति स्वामि–न्नित्यपृच्छं तमल्पधीः ॥ ११९१ ॥
सोऽभाषत प्रिये ? किञ्चि–न्न भेतव्यं त्वयाऽधुना । ज्ञास्यसि त्वं बलाद्यष्टेर्द्रावितांस्तान् क्षणात्परम् ॥ ११९२ ॥
जीवनाऽर्णवनौरूपां त्वां सम्प्राप्तुं विमूढधीः । व्यस्मार्षं शस्त्रसंघातं सर्वापद्विनिवारकम् ॥ ११९३ ॥
आनन्दाय महोत्साहात् स्नेहबद्धेन चेतसा । केवलं श्रेष्ठरत्नानि गृहीतानि मया गृहात् ॥ ११९४ ॥
साहसोपस्थिताऽऽपत्ते–श्चिन्ताऽपि नैव चिन्तिता । तथापि भव निश्चिन्ता प्रिये ! त्वं सुसमाहिता ॥ ११९५ ॥
भविष्यति बलिष्ठो यः स संग्रामे विजेष्यते । आरण्यका इमे चौरा नैव जानन्ति मद्बलम् ॥ ११९६ ॥
महोर्दण्डबलाऽज्ञानात्तैस्तु साहसमादृतम् । प्रादुर्भूते च मद्वीर्ये स्तेनाः स्थास्यन्ति नो किल ॥ ११९७ ॥
एकं स्तेनं पातयिष्यामि नीचै–स्तस्याऽस्त्राणि क्षिप्रमुतारयिष्ये ।
अन्यांश्चैतान्नाशयिष्यामि पश्चाद् गत्वा चाहं कार्यसिद्धिं करिष्ये ॥ ११९८ ॥
अनिष्टः परिणामश्चे–द्दैवतःप्रभविष्यति । लुण्ट्यमानां विलोक्य त्वां योत्स्ये प्राणपणेन वै ॥ ११९९ ॥
यतस्त्वद्वस्त्रभूषादि गृहीतुं तत्परानिमान् । त्वद्बन्धनञ्च कुर्वाणानेनाऽहं प्रेक्षितुं क्षमः ॥ १२०० ॥
मदर्थमेव पूर्वस्मिन् भवेऽत्याक्षीः प्रियानसून् । अस्मिन्भवेऽपि मत्प्रीत्या विदेशाय विनिःसृता ॥ १२०१ ॥

अतो यावन्मयि प्राणास्तावत्त्वद्रक्षणाय वै । यावद्बलं मया योद्धुं नो स्थीयेत कथं प्रिये ! ॥ १२०२ ॥

मां निवारय नो सुभ्रु ! युद्ध्यमानं रणाऽजिरे । स्तेनैः साकं महाक्रूरै-र्मरणं वा जयोऽस्तु मे ॥ १२०३ ॥

गिरन्तस्य समाकर्ण्य पतित्वा तत्पदाब्जयोः । अवोचं नाथ ! माऽनाथां मां विमुच्याऽगमः प्रिये ! ॥ १२०४ ॥

योद्धुमेवास्ति चेदिच्छा क्षणं तिष्ठ तथापि भोः । यावत्सौख्यकरं मृत्युं साधयामि निजेच्छया ॥ १२०५ ॥

यतस्तेन करप्राप्तं भवन्तं वीक्षितुं कथम् । समर्था स्यामतो मृत्युर्वरमेव पुरैव मे ॥ १२०६ ॥

हा ! हा ! वल्लभ ! जातोऽपि मदीयस्त्वं सुखप्रदः । स्वप्ने प्राप्त इवाऽकस्मात् क्षणादेव वियोक्ष्यसे ॥ १२०७ ॥

आगामिनि भवेऽस्माकं परस्परसमागमः । भविष्यति नवेत्येत-ज्जानाति केवली विभुः ॥ १२०८ ॥

यावज्जीवाम्यहं ताव-त्तिष्ठ त्वं सन्निधौ ततः । आवां नैव भविष्यावो वियुक्तौ स्निग्धबन्धनौ ॥ १२०९ ॥

अन्यत्तु दैवताऽधीनं यद्भावि तद्भविष्यति । भाविकर्मफलन्त्यक्तुं नास्ति कोऽपि क्षमो नरः ॥ १२१० ॥

एवमुदीर्य दीनानि वचांसि यान् रणाङ्गणे । निषिद्धो मत्पतिः सद्यो मयाऽश्रुक्लिन्नचक्षुषा ॥ १२११ ॥

स्तेना अपि मया प्रोक्ता रुदन्त्या विहिताञ्जलि । सम्प्रार्थ्य मदलङ्कारान् गृहीध्वं यूयमिच्छया ॥ १२१२ ॥

मत्प्रियं स्नेहसम्बद्धं मुञ्चत प्राणतोऽधिकम् । इयं मे याचना कार्या सफला कृपयालुभिः ॥ १२१३ ॥

इत्थं विज्ञापयन्तीं मा मनागप्यैव तस्करैः । गृहीतौ क्रूरचेतोभिर्बलात्कारपरायणैः ॥ १२१४ ॥

छिन्नैकपक्षपक्षीव गन्तुमन्यत्र चाक्षमः । पूर्वकर्मफलं मत्वा पतिस्तूर्णीं स्थितस्तदा ॥ १२१५ ॥
कतिचिन्मोषकास्तावन्नौकाञ्च तत्र संस्थिताम् । द्रव्यग्रन्थि समादाय स्वाधीनां चक्रिरे क्षणात् ॥ १२१६ ॥
अन्ये मामनयन् दूरे पूत्कारान्कुर्वतीमपि । मत्पतिश्चापरे चौरा जगृहुर्बलिनो बलात् ॥ १२१७ ॥
विषवैद्यनिनादेन भुजङ्गम इवाऽभवत् । मत्प्रार्थनेन मे स्वामी शिथिलो युद्धकर्मणि ॥ १२१८ ॥
आवां ग्रन्थिं धनस्यापि स्तेना भागिरथीतटे । सिकतासञ्चिते निन्युर्मुदिताश्चातिसुन्दरे ॥ १२१९ ॥
निर्दयैस्तैर्मदीयाङ्गाद्–गृहीताऽरुङ्कृतिः समा । परन्त्वावां विहितौ न वियुक्तौ दैवयोगतः ॥ १२२० ॥
अपचीयमानपुष्पां लतामिव पतिर्मम । ह्रियमाणविभूषां मां वीक्ष्य दूनोऽरुदद् भृशम् ॥ १२२१ ॥
अहमप्यरुदं यस्माद्भर्ता चोरितकोपवत् । पद्महीनसरोवद् वाऽदृश्यत विगतप्रभः ॥ १२२२ ॥
अतितारतराक्रन्दं श्रुत्वा मे मोषका जगुः । तूर्णीं भवाऽधुना नोचेद्धनिष्यामः पतिं तव ॥ १२२३ ॥
ततोऽहमभवं तूर्णीं पत्युर्जीवनचिन्तया । केवलं रुद्धकण्ठेन मन्दं मन्दं रहोऽरुदम् ॥ १२२४ ॥
वक्षःस्थलं प्रयातानि निःश्वासाऽश्रूणि वेगतः । तथापि रोधनध्वान ओष्ठप्रान्तं न चागमत् ॥ १२२५ ॥
रत्नानां ग्रन्थिमालोक्य मोषकाऽधिपतिस्तदा । मोदमानोऽब्रवीदित्थं सम्यग्लाभोऽधुनाऽजनि ॥ १२२६ ॥
अन्योऽवदत्समस्तेऽपि प्रासादे लुण्टिते धनम् । एतावन्नैव लभ्येत कृते यत्ने महत्यपि ॥ १२२७ ॥

परोऽवादीत्प्रसभास्योद्युतकर्मरतो जनः । भाग्यवान्बहुभिर्वर्षैरपि तावल्लभेत नो ॥ १२२८ ॥

एतस्मिन् सकले दत्ते किं वदिष्यन्ति योषितः । अस्माकमिति कुर्वन्तो वार्त्तां ते तस्करास्ततः ॥ १२२९ ॥

गृहीत्वा नौ तटं गाङ्गं विमुच्य विन्ध्यभूभृतः । दक्षिणाऽऽशां समुद्दिश्य प्रयाणं पुरतो व्यधुः ॥ १२३० ॥

पर्वतस्याऽतिगम्भीर-कोटरेऽतिभयप्रदा । तेषामासीद् गुहा तत्र निन्युरावां नियन्त्रितौ ॥ १२३१ ॥

केचिद् बहि स्थितास्तत्र वारिपानं ययाचिरे । तस्यां दर्यां यतो मिष्टं बभूव बहुलं जलम् ॥ १२३२ ॥

तस्या द्वारं दृढश्चासीदसिकुन्तादिशस्त्रिणः । तस्करा गच्छदागच्छ-न्नरसूक्ष्मेक्षणां व्यधुः ॥ १२३३ ॥

ढक्काशङ्खादिवादित्रैर्गानैर्हास्यैश्च नर्तनैः । तारस्वरेण साऽप्युच्चैर्गर्जति स्म दरी वरा ॥ १२३४ ॥

प्रविशद्भ्यां दरीमेतामावाभ्यां ध्वजतोरणैः । ज्ञातमेतन्महाकाल्या मन्दिरं विद्यतेऽद्भुतम् ॥ १२३५ ॥

तस्या देव्या महापूजानिमित्तोऽभून्महोत्सवः । वन्दितुं तां ततो नीतौ दक्षिणस्यां दिशि स्थिताम् ॥ १२३६ ॥

अन्यैश्च तस्करैस्तत्र प्रभूतमाहृतं धनम् । पतितं वीक्षितं चास्मद् व्यतिरिक्तं महाद्युति ॥ १२३७ ॥

उभे च मण्डले लब्ध्वा धनं प्रत्यागते यतः । प्रणामं चक्रतुस्तेन मिथः प्रोत्फुल्लमानसे ॥ १२३८ ॥

पप्रच्छुः कुशलोदन्तं परस्परसुखैषिणः । मोषका मिलिताः सर्वे सर्वथाऽभिन्नवृत्तयः ॥ १२३९ ॥

लतानिबद्धदेहौ नौ वपुषौ तदा केचिन्मलिम्लुचाः । आवामेवैकलक्ष्येण निरैक्षन्ताऽतिकौतुकात् ॥ १२४० ॥

तेषामेकोऽभवद्चोरो विधात्रा या विनिर्मिता । नरनारीमयी सृष्टिस्तनोऽसन्तुष्टचेतसा ॥ १२४१ ॥

तां विनाश्य पुनर्युग्ममेतन्निर्मितमस्ति वै । चन्द्राद्रात्रिस्ततश्चन्द्रस्तथेमावधिकप्रभौ ॥ १२४२ ॥

तत्राऽपश्याव सङ्घौ द्वौ स्वर्गिनारकयोरिव । हर्षग्लानिप्रदो यस्माद्दर्शने विस्मयस्तयोः ॥ १२४३ ॥

आद्ये यतो महानन्दा जनास्तस्थुर्न यन्त्रिताः । अन्यस्मिंश्च निरानन्दाः कारायां यन्त्रिताः स्थिताः ॥ १२४४ ॥

देवतामिथुनं भव्यमिव युग्मं नरस्त्रियोः । आनीतमिति संश्रुत्य दरीमार्गो महानपि ॥ १२४५ ॥

द्रष्टुकामैर्महोत्साहैर्बालवृद्धैर्विशेषतः । नारीगणैश्च सङ्कीर्णो बभूव क्षणमात्रतः युग्मम् ॥ १२४६ ॥

निर्विण्णचेतसावावां नीतावग्रे ततोबलात् । तदा कारास्थिता नार्यो विलापं कर्तुमुद्यताः ॥ १२४७ ॥

अस्मदीया इवैतास्तु विलोक्याऽऽवां दयापराः । निजबालवदस्मासु स्नेहभावमदर्शयन् ॥ १२४८ ॥

ततो गुणप्रिया काचिल्लुण्टाकस्त्रीदमब्रवीत् । मत्प्रियं सुन्दराकारं समागच्छ मदन्तिकम् ॥ १२४९ ॥

आवयो रक्षकः प्रोक्तस्तया चन्द्रसमाकृतिः । रोहिणीमिव नारीं यः समादाय समागतः ॥ १२५० ॥

युवानमत्र तं यूयं स्थापयत क्षणं यतः । तस्करप्रमदानेत्र-व्रजः सफलतां व्रजेत् ॥ १२५१ ॥

व्रजन्तं तं निरीक्ष्यैताऽऽ-मोहिताः स्तेनयोषितः । दुःखार्ताः प्ररुदन्ति स वीक्ष्यैव तं मनोहरम् ॥ १२५२ ॥

एतदाचरणं तासां विलोक्य दीनतामयम् । असूययाऽतिसन्तापात् क्रोधेन मे मनोऽदहत् ॥ १२५३ ॥

कारापतितनारीणां काश्चित्तु निजसूनुवत् । निरीक्ष्य मत्प्रियं भव्य-मशोचन्नश्रुलोचनाः ॥ १२५४ ॥
काश्चित्तु कथयन्ति स्म दिव्यरूपेण सज्जन ! । अस्माकं हरसे चित्तं रम्य ! शोभासमन्वित ! ॥ १२५५ ॥
भव्यात्मंस्तव दृष्टेश्च दिव्यगण्डूषमर्पय । तृषातुराणां सर्वेषां पानं हि तृप्तिदायकम् ॥ ११५६ ॥
काश्चिदश्रुप्लुताः प्रोचुः दयार्द्रहृदयाम्बुजाः । विचिन्त्य मनसा स्तेन-वनिता व्याकुला इति ॥ १२५७ ॥
निजभार्यासमेतस्त्वमितो मुक्तिमवाप्नुयाः । वरं तर्ह्यन्यथा भावि विपरीतं किमप्यहो ! ॥ १२५८ ॥
अन्यैका तद्दिव्यरूपवीक्षणेन विमूढधीः । मेखलाघण्टिकानादा-त्तमाऽऽह्वातुं प्रचक्रमे ॥ १२५९ ॥
मदर्थं बह्वश्चापि वार्तालापाःप्रवर्तिताः । युवको नर्त्तकः कश्चिज्जातकामज्वरोऽवदत् ॥ १२६० ॥
अहो दिव्यमिदं रूपं प्रमदाया अलौकिकम् । केचित्तु कामिनोऽङ्गुल्या मां मिथः समदर्शयन् ॥ १२६१ ॥
वार्ताश्च मोदतश्चक्रुः कामिनामीदृशी मतिः । वर्णयामासुरुत्कृष्टं मदीयरूपवैभवम् ॥ १२६२ ॥
दृश्यतां सर्वथैतस्या रूपसौन्दर्यमद्भुतम् । अस्या दिव्यवपुर्वल्ल्यां कलिकासोदरौ स्तनौ । ॥ १२६३ ॥
अङ्कुराविव हस्तौ च स्फुटितौ कीदृशौ वरौ । एतां मनोरमां दृष्ट्वा पयःपूर्णापगास्मृतिः ॥ १२६४ ॥
जायतेऽस्याःस्तनौ चक्रवाकयोर्युगलं यथा । अनेकघण्टिकायुक्ता मेखलादृष्टिहारिणी ॥ १२६५ ॥
हंसश्रेणिरिवाभाति श्वेतरत्नविनिर्मिता । नितम्बयुगलश्चास्या विशालसिकतातटौ ॥ १२६६ ॥

उदयन् पूर्णिमाचन्द्र इव रोदनतो मुखम् । हावैर्भावैर्मनोहारि कामिनां मोहकारकम् ॥ १२६७ ॥
अस्याः स्वरूपमालोक्य स्मरणं जायते श्रियः । केवलं हस्तयोः फुल्लवारिजे न विराजतः ॥ १२६८ ॥
न्यूनता तावती चास्यां नो चेल्लक्ष्मीरियं खलु । श्रवणौ कीदृशौ रम्यौ नेत्रयोः नीलता स्थिता ॥ १२६९ ॥
दन्ताः श्वेततराश्चास्याः स्तनौ पुष्टौ विलोक्यताम् । जङ्घायुगमहो भव्यं वर्तुलाकृति दीप्यते ॥ १२७० ॥
पादौ चास्या भृशं रम्यौ रचना कौशलस्पृशौ । ऊचतुरपरौ चौरौ योग्यालङ्कारधारणात् ॥ १२७१ ॥
नूनमेषा भवेत् साक्षाद् रम्भा स्वर्गनिवासिनी । स्तम्भोऽपि स्पर्शने तस्याः कामाविष्टो भवेद्ध्रुवम् ॥ १२७२ ॥
महातपस्व्यपि स्वीय–तपसाऽभिलषेदिमाम् । इन्द्रोऽप्येतां निरीक्षेत सहस्रनयनैरपि ॥ १२७३ ॥
यदि तन् नाधिगच्छेत् स तृप्तिं तद्भोगसम्भवाम् । ये त्वन्ययोषितं दृष्ट्वा लज्जया संकुचिदपि ॥ १२७४ ॥
वराकी भाग्यहीनाऽपि परिणीतेयमित्यगुः । केचनावां विलोक्यैव तस्करा अनुमेनिरे ॥ १२७५ ॥
नूनमस्मत्पतिस्त्वेनं विनाश्यैनां विवक्ष्यति । इति वार्त्तापरं सर्वं बभूव लोकमण्डलम् ॥ १२७६ ॥
मत्स्वामिमृत्युसम्बद्ध–तर्काच्चिन्ताऽभवन्मम । सामान्यतो युवानो मां युवत्यो मत्पतिं तथा ॥ १२७७ ॥
वर्णयन्ति स्म हर्षेण बहुधा स्निग्धचेतसः । अवशिष्टजनाः केचि–ज्जिज्ञासया निराश्रया ॥ १२७८ ॥
ताटस्थ्येनाऽपरे केचिद् अस्मद्वार्तां वितेनिरे । तस्या दयां स्थिता लोकास्त्रिधैवं मतमूचिरे ॥ १२७९ ॥

भिन्नभिन्नानभिप्रायाँस्तेषां विपयवर्धकान् । शृण्वन्तस्तत्क्रमाद् गेहं प्राप्ताः पल्लीपतेर्वयम् ॥ १२८० ॥

अभ्रंलिहञ्च तद्गेहं कण्टकानां विसारिणाम् । वृत्याऽतिदृढया चैव वेष्टितं परितोऽभवत् ॥ १२८१ ॥

तन्मध्ये विटपच्छन्ने खण्डकेऽस्मान्निनाय सः । तस्कराणामिदं पत्युः सभास्थानमभूद् वरम् ॥ १२८२ ॥

प्रसिद्धविक्रमाऽऽक्रान्त इवाऽसौ मुख्यपूरुषः । विष्टरे तस्थिवान् स्निग्ध–नवपल्लवनिर्मिते ॥ १२८३ ॥

विकस्वरपयोजानां वृहद्गुच्छेन स स्वयम् । वीजयन्नात्मनो देहं पश्यति स्म समन्ततः ॥ १२८४ ॥

पुष्पगुच्छः स सौवर्ण–समानोऽदीप्यताऽद्भुतः । तत्र स्थिता द्विरेफाश्च गुञ्जनामधिकां व्यधुः ॥ १२८५ ॥

सङ्ग्रामे विजयाल्लब्धशस्त्राऽस्त्राणि दधार सः । निजाङ्गेषु समस्तेषु तस्कराणामधीश्वरः । ॥ १२८६ ॥

अनेकेषु च युद्धेषु सङ्कटेषु च लुण्टकाः । आपन्नविजयाः सर्वे स्थितास्तस्य समन्ततः ॥ १२८७ ॥

चण्डात्मानो यमं दूता इवैनं सर्वतोऽखिलाः । तस्करा वेष्टयामासुर्निजकर्मविशारदाः ॥ १२८८ ॥

मांसेनोपचिते तस्य घुटिके पादयोः शुभे । जङ्घे च पुष्टतायुक्ते नितम्बौ पृथुलौ भृशम् ॥ १२८९ ॥

आवां तु चिन्तया मृत्योः कम्पमानकलेवरौ । प्रणेमिव महाक्रूरं ललाटनिहिताञ्जलि ॥ १२९० ॥

मृगद्वन्द्वं यथा सिंहः क्रूरदृष्ट्या तथैव नौ । भृशं व्यलोकयत्तेन चिन्ताऽधिकतराऽभवत् ॥ १२९१ ॥

स्तेनयूथं समीपस्थमावयो रूपमुत्कटम् । यौवनोद्भिन्नमत्युग्र–वक्रदृष्ट्या न्यमालयत् ॥ १२९२ ॥

विस्मितश्चाऽभवत् सद्योऽदृष्टपूर्वविलोकनात् । नवीनं वस्तु सम्प्रेक्ष्य को न कौतुकितो भवेत् ॥ १२९३ ॥
वीराणां योषिताश्चैव ब्राह्मणानाञ्च हत्यया । दुष्टकर्मभिरन्यैश्च निर्दयः शबरेश्वरः ॥ १२९४ ॥
सर्वथा क्रूरभावेन सम्पश्यन्निदमब्रवीत् । समीपस्थैकलुण्टाकं ततः स्वेष्टविनिर्णयात् ॥ १२९५ ॥
सर्वैरस्माभिरिष्टयर्थं दातव्यो यादृशो बलिः । देव्यै तथाविधं युग्मं तयैव प्रेषितं वरम् ॥ १२९६ ॥
ततो देवीनवम्याश्च रात्रावेतत्प्रदास्यते । मिथुनं बलिरूपेण रक्ष्यश्चातः प्रयत्नतः ॥ १२९७ ॥
निशम्येदं वचस्तस्य चिन्ताऽमेयाऽभवद्धृदि " मृत्युभयं समुत्पन्नं किं भविष्यति हाऽधुना ! " ॥ १२९८ ॥
लुण्टाकः सोऽग्रहीदाज्ञां नम्रतापूर्वकं ततः निन्ये गृहं निजं तेन बद्धश्च मत्पतिर्दृढम् । ॥ १२९९ ॥
कष्टं तथाविधं तस्य पश्यन्त्या मम चेतसि । संतापाग्निः समुत्पन्नः सकलेन्द्रियशोषकः ॥ १३०० ॥
नताननाभुजङ्गीव गरुडाऽऽहृतभर्तृका । असह्यव्यथनेनाऽह-माक्रन्दं कर्तुमुद्यता ॥ १३०१ ॥
विकीर्णकेशपाशाग्राऽ-श्रुप्रवाहं विमुञ्चती । मत्प्रियं तस्य बन्धं च समाश्लिक्षं सुदुःखिता ॥ १३०२ ॥
मयोक्तं " दन्तिनं वन्य-माश्लिष्टां हस्तिनीमिव । नरोत्तमेन साकं मा-मप्येतेन बधान वै ॥ १३०३ ॥
यतस्तत्पृष्टभागेन संश्लिष्टौ करपल्लवौ । आजानुलम्बमानौ च ममैवाऽऽलिंगनोचितौ " ॥ १३०४ ॥
एवमुक्त्वा च तं बन्ध-निर्मुक्तं कर्तुमुद्यता । तावत्तु तस्करेणाऽहं ताडिता क्रूरचेतसा ॥ १३०५ ॥

निर्भर्त्स्य दूरमुत्सार्य्य पार्श्वतो मामतिष्ठिपत् । बन्धनं वपुषि स्वस्मिन् निर्दयेन विनिर्मितम् ॥ १३०६ ॥
मत्स्वामी धैर्यमाधाय तावत्कालं तु सोढवान् । तादृशीं मे दशां दृष्ट्वा धीरतारहितोऽभवत् ॥ १३०७ ॥
रुदन्नश्रुमुखः सोऽवक् " प्रिये ! त्वं मम हेतवे । कदाप्यश्रुतपूर्वां हा ! सहसे वेदनामिमाम् ॥ १३०८ ॥
मद्बन्धुजनकष्टेऽपि यो न शोको ममाऽजनि । नववध्वास्तु दुःखेन समे मर्माणि कृन्ततिः ॥ १३०९ ॥
सकलजनतो भार्यामध्येऽधिका मनसः स्थिति–रत इह मतं भार्यादुखं सतामपि दुःसहम् ।
ग्रहगण इतो भार्यास्थाने करोति सदा दशां, प्रकृतिविवशस्तस्मात् सर्गोऽधुना सकलोऽप्ययम् " । ॥ १३१० ॥
श्रुत्वेति तस्करः सोऽपि वलिष्ठमिव कुञ्जरम् मत्वा मत्स्वामिनं भूमा–वाहत्याऽपातयत्क्रुधा ॥ १३११ ॥
" आस्तां बन्धेन तद्धस्तौ पृष्ठेन सह संयुतौ तमेवं निश्चलं कृत्वा काष्ठे चोपाविशत्स तु ॥ १३१२ ॥
तत्र स्थितश्च दुष्टः स आममांसमभक्षयत् । मदिरां चापिबत्कण्ठ–पर्यन्तं राक्षसोपमः ॥ १३१३ ॥
मृत्युचिन्तार्त्तया प्रोक्तं मया हे प्रियवल्लभ ! निर्दयेऽस्मिन्स्थलेऽस्माकं मरणं हा ! भविष्यति ॥ १३१४ ॥
ततोऽत्रोचमहं " चौरं कौशाम्ब्या व्यवहारिणः । पुत्रोऽयमेककश्चाहं नगरश्रेष्ठिनः सुता ॥ १३१५ ॥
निजेप्सितानि रत्नानि सुवर्णमौक्तिकानि च । प्रवालादीन्यमूल्यानि दापयिष्यामि ते ततः ॥ १३१६ ॥
अस्माकं तातयोः पार्श्वे पत्रं दत्त्वा निजं नरम् । प्रहिणु त्वं स तत्सर्वं लात्वाऽऽगच्छेत्तदा ध्रुवम् ॥ १३१७ ॥

मोचनीयौ त्वया बन्धा–स्सत्यमेतद् ब्रवीम्यहम् । ततः स तस्करोऽवादी–द्देव्या बल्यर्थमाहृतौ ॥ १३१८ ॥
निश्चित स्वामिनाऽस्माकं नान्यथा तत्तु जायते । स्वामिनो वचनं मान्यं केषां चेतसि नो भवेत् ? ॥ १३१९ ॥

स्वप्राणजीवनधनादिविभागपूर्वं, यो निश्चितः स्वहृदयेन शरण्यरूपः ।
वाक्चित्तकायपरिकल्पितनाथभावः, सर्वेश्वरस्य किल तस्य वचःप्रमाणम् ॥ १३२० ॥

पूर्णीकृताऽस्मदाशायै देव्यै भोगो न दीयते, कल्पितश्चेत्तदा सा स्या–त्क्रुद्धाऽस्मान्नाशयेद्ध्रुवम् ॥ १३२१ ॥
तथा चाऽस्मत्प्रयत्नानां फलं च जयसम्पदः । सर्वं सुखं च या दत्ते तत्कार्यं संत्यजेच्च कः ॥ १३२२ ॥
इत्थं निशम्य तद्वाक्यं दृढं बद्धं प्रियं मम । विलोक्य रोदितुं लग्ना हृदयोद्भेदपूर्वकम् ॥ १३२३ ॥
स्वामिस्नेहविपाशेन निबद्धा व्यलपं भृशम् । मुक्तकण्ठं निराशैव नष्टोपायाऽतिदुःखिता ॥ १३२४ ॥
नेत्रतो मे पतन्ति स्म अविच्छिन्नाऽश्रुराशयः । यैर्वक्षस्थलमापन्न–मार्द्रतां मौक्तिकप्रभैः ॥ १३२५ ॥
विलोक्याश्रुप्रवाहं मे कारागृहस्थिताःस्त्रियः। रुदन्ति स्म महाक्रन्दं शृण्वन्त्यो म्लानमानसाः ॥ १३२६ ॥
आक्रन्दनं कृतं भूरि विलापा बहवस्तथा, । मस्तकं कुट्टितं चैव विकीर्णा मूर्धजा मया ॥ १३२७ ॥
वक्षश्च ताडितं भूयो मया दुःखार्तचेतसा । ततो मूर्च्छां समापन्ना क्षणं स्वप्नं व्यलोकयम् ॥ १३२८ ॥

अथ नियतिनियोगादापदा येऽभिभूता, प्रतिपलमिह नैवाऽऽघातमुग्रं सहन्ते ।

इह जगति तदर्थं शान्तिदा नाम मूर्च्छा, जनयति सुखमेषा स्वप्नसंदर्शनेन ॥ १३२९ ॥

सुखदं जागरे पश्चादरोदं भृशपीडिता । " स्वप्ने त्वद्दर्शनं मेऽभूत्प्राणेश ! सुखदायकम् ॥ १३३० ॥

अहमेकाकिनी भीरुः करिष्ये रोदनं सदा । इति वेदनया भूरि मया दुःखमवेद्यत ॥ १३३१ ॥

केचित्स्तेना महाऽऽनन्दं वेदयन्तः परस्परम् । गायन्ति स्म स्वैरिष्टैर्वीणया मधुरं ध्वदः ॥ १३३२ ॥

अनपेक्ष्य गिरं हृद्यां जीवितं मरणं तथा । उत्साहशक्तिमापन्नाः साधयन्ति समीहितम् ॥ १३३३ ॥

यतोऽन्यजन्तुवन्मृत्युरवश्यं जायते नृणाम् । साहसेनेष्टसिद्धौ तु मानुष्यं सफलं भवेत् ॥ १३३४ ॥

दुखौघपूर्णे जगति प्रवृद्धे, मनोरथं नामकथं लभन्ताम् !

आशानियोक्त्री शुभसाहसश्च सहायकः स्यान्नपरस्तदानीम् ॥ १३३५ ॥

तस्माद्धि साहसं कर्त्तुं शीघ्रं धावत हे जनाः ! । जयेन यः समायुक्तो म्रियतेऽत्र सुखेन सः ॥ १३३६ ॥

यतो वीरो गतं सौख्यं यावन्नाप्नोति तत्पुनः । तावदुत्साहमाधत्ते नवीनमिव सर्वदा ॥ १३३७ ॥

विघ्नौघविप्लुष्टमनोरथानामुत्साहशक्तिप्रवरा मता मे । दिवाकरः सर्वसहायहीनः सूत्साहतो याति नभोऽग्रपारम् ॥ १३३८ ॥

नूनं वीरजनः पीडां धारयन्नपि शौर्यतः । विघ्नान्विलङ्घयेच्चेत्तु शर्मश्रीमुदितो भवेत् " ॥ १३३९ ॥

ततो जगाद मे स्वामी " शुचं संत्यज्य वल्लभे ! । श्रुणु मद्वचनं चैकं रोदनं त्यज साम्प्रतम् ॥ १३४० ॥

निजप्रयत्नः फलवान् न यत्र बलीयसाऽऽक्रान्तयुताऽस्ति यच्च ।
न तत्र शोकः सुधीया विधेयः शोकः स्वमार्गस्य हि रोधकर्त्ता ॥ १३४१ ॥
अस्मात्कारागृहान्मोक्षो दुर्लभोऽस्त्यावयोः किल । पाणिभिश्चाऽविरोधेन स्वीकार्याऽऽज्ञा यमस्य हि ॥ १३४२ ॥
" यमराजसमाक्रान्तोऽनुपायो मानवः: " स्मृतः । निशि ताराग्रहैः साकं भ्रमंश्चन्द्रोऽपि पीड्यते ॥ १३४३ ॥
गगनमिदमनन्तं साऽवकाशं विबाधं, ग्रहगणवरतारामालिकाभिर्विमिश्रम् ।
अयमपि हिमरश्मिः शान्तिदाता जनानां विधिविवशमुपेतः किं न यात्यस्तभावम् ! ॥ १३४४ ॥
शनैः शनैः क्षयं प्राप्य विच्छाये मण्डले विधुः । गाढान्धकारतां बिभ्रद्-दौर्भाग्यमवलम्बते ॥ १३४५ ॥
सामान्यमानवानां तु निर्भयत्वं कुतो भवेत् ? । मरणाधीनता लोकेऽवश्यमेवाऽत्र देहिनाम् ॥ युग्मम् ॥ १३४६ ॥
गुणगणरहितानां स्वार्थनाशोद्यतानामतिबलमदभाजां नैवभीतिः परस्मात् ।
इह सकलजनानामैकमत्येन वच्मि *ह्यसुकृतसुखभाजां मृत्युतोभीतिरस्ति ॥ १३४७ ॥
देशकालपदार्थानां प्रकारस्याऽनुसारतः । कृतकर्मफलं देही लभते नाऽत्र संशयः ॥ १३४८ ॥
देहिनां सुखदुःखानि निजकर्मविपाकतः । जायन्ते नितरां लोके नियमोऽयं सदातनः ॥ १३४९ ॥

---

* " न सुकृत-असुभिः प्राणैः कृतो वा "

दैवायत्तं सुखं दुःखं दैवमेव बलं नृणाम् । सम्पदो दैवतश्चाथ कीर्त्तयो दैवमूलिका ॥ १३५० ॥
भवति नो सफलं कृतपौरुषं, यदि न भाग्यमथोदयति स्वकम् । अशनहेतुकमाखुकृतं विलं, विधित आखु विनाशकरेऽभवत्
दैवं विहाय न क्वापि कोऽपि सम्पत्तिमान्भवेत् दैवादेव विनश्यन्ति प्राणिनां विपदः सदा । ॥ १३५२ ॥
तस्मात्प्राणप्रिये ! धैर्यं न जहीहि वरानने ! न कोऽप्येतादृशो लोके विधिं लङ्घयितुं क्षमः ॥ १३५३ ॥
अगाधपाथोधिजले निवासः विचित्रभङ्गीगतिभिः प्रयासः ।
तथाऽपि मत्स्यः समुपैत्ति नाशं, को वेत्ति भाग्यं प्रभुमन्तरेण ? ॥ १३५४ ॥
इति सान्त्ववचोभिर्मे शोकस्तोकत्वमाप्तवान् । भर्त्रा सह निवद्धाहं हरिणीवाऽश्रुविप्लुता ॥ १३५५ ॥
कारागृहनिषण्णस्त्री–मुखान्यालोकयन्ततः । मद्विलापेन कासांचिन्नेत्रेभ्योऽश्रुणि निर्ययुः ॥ १३५६ ॥
ता अपि स्वानि दुःखानि स्मृत्वा रोदितुमुद्यताः । याः प्रकृत्यैव सरला तास्त्वस्मद्दर्शनेन हि. ॥ १३५७ ॥
परिणामसुखार्थिभिर्नरैः नितरां चेतसि चिन्त्यते ह्यदः । परचित्तशरीरवाग्भवं करणीयं नहि दुःखयोजनम् ॥ १३५८ ॥
निजप्रेम्णा विशुद्धेन, परदुःखेन दुःखिताः । रुदन्त्यश्च गलद्बाष्पा आवां पप्रच्छुरादरात् ॥ १३५९ ॥
" युवां समागतौ कस्मात् कुतस्तस्करहस्तगौ ? ब्रूतं सर्वं निजं ब्रूतमुत्कण्ठा नः प्रजायते. " ॥ १३६० ॥
अश्रुमुख्या रुदन्त्या च दौर्भाग्यजनिता मम । आरभ्य प्राग्भवात्सर्वा मया वार्ता निवेदिता ॥ १३६१ ॥

चक्रवाकभवे पद्महृदतीरविहारिणौ । प्रभूतानन्दमग्नौ चाऽ-भवाव दम्पती पुरा ॥ १३६२ ॥
विकसत्पद्मकासारे कुञ्जरः स्नातुमागतः । व्याधेन क्षिप्तबाणा तं हन्तुं मेऽनाशयत्पतिम् ॥ १३६३ ॥
ततोऽतिदुःखिताऽहन्तु तं विना स्थातुमक्षमा । मृता च वत्सपुर्यां द्वौ ततो जातौ नृजन्मनि ॥ १३६४ ॥
ततश्चित्रसहायेन प्रत्यभिज्ञानमावयोः । विवाहः प्रार्थितः किन्तु पित्रा नाङ्गी कृतं मम ॥ १३६५ ॥
ततो मया सारसिका प्रेषिता तस्य सन्निधौ । पलाय्य नावमारुह्य गंगातीरे च बन्धनम् ॥ १३६६ ॥
इतिवृत्तान्तमाख्यातं मया सर्वं यथास्थितम् । एकाग्रमनसाऽऽश्चर्य-पूर्वकं प्रीतिमान्परम् ॥ १३६७ ॥
तत्सर्वं श्रुतवान् तत्र काष्ठस्थः स च रक्षकः । श्रुत्वैतत्स निषादोऽपि बभूव कृपयान्वितः ॥ १३६८ ॥
मम नाथस्य बन्धांश्च शिथिलान्कर्तुमभ्यगात् । कारागृहस्थनार्यस्तु तर्जितास्तेन निर्दयम् ॥ १३६९ ॥
मेघनादेन संभीता हरिण्य इव दुःखिता । परस्परं वियुज्यैता अनश्यंस्त्रस्तलोचनाः ॥ १३७० ॥

गतासु तासु सर्वासु जगाद मत्पतिं शनैः ।
इदानीं ते भयं नास्ति चिन्तया वर्जितो भव ! ॥ १३७१ ॥

मृत्युतो मोचयिष्यामि युवां कष्टं श्रयन्नपि । उपायं कमपि प्रायश्चिन्तयिष्ये भवत्कृते ॥ १३७२ ॥
निजानुभूतौ यदि दुःखमस्ति भविष्यति द्राक् तदलं परेषाम् । न तत्प्रकर्त्तव्यमिह स्वहेतो-र्दुष्कार्यमेतन्मनसो मतं न" ॥१३७३॥
एतद् वचनमाकर्ण्य दयापूर्णं विनिर्गता । निधनोत्पन्नभीतिस्तु सर्वथाऽङ्गविशोषिणी ॥ १३७४ ॥

समुत्पन्ने प्रमोदेऽपि मुक्तये गाढबन्धनात् । उपवासः कृतोऽस्माभिः सर्वथाऽऽहारवर्जितः
ततो जिनेश्वरं स्मृत्वा शुद्धभावेन चेतसा । प्रत्याख्यानं त्रिधा चक्रेऽस्माभिः कष्टजिह्वासुभिः ॥ १३७५ ॥
अथ तेन निषादेन मांसाऽऽहारो रसप्रदः । आनीय स्थापितोऽस्माकं मुखाग्रे शुद्धभावतः ॥ १३७६ ॥
" प्रवासस्याऽतिवैषम्याद् भोजनं कुरुतं मुदा " । इत्युक्ते भुञ्जावहे नैत—मदक्ष्यं जिनशासने ॥ १३७७ ॥
"मांसे का शुचिता?" तदुक्तिरपि यज्जिह्वावतां नोचिता, नासा संकुचिता वमन्ति सुधियः केचिद् घृणोदञ्चिता । ॥ १३७८ ॥
प्राग्जन्मोपचिताः समीक्ष्य यमिमं नष्टाः शुभाः संचिताः, हा!यूयं कुगुरुप्रलापपतिता वै वञ्चिता वञ्चिताः ॥ १३७९ ॥
"पूर्वं मांस चखाद, संप्रति ततोऽहं भक्षये भक्षये, मांसस्येति हि मांसता मनुमहाराजस्मृतौ संस्मृता
मांसास्वादनजं फलं तु कटुकं श्वभ्रादिपातोन्मुखं, ज्ञात्वैवं भविका ! यतध्वमनिशं दूरेण तद्वर्जने ॥ १३८० ॥
प्राणिप्राणविघातनादपि विना मांसः क्वचिल्लभ्यते, तत्प्राणव्यपरोपणं भवति, तद्धिंसा बुधैः संस्मृता
दारिद्र्यादिविधानबद्धकटिका हिंसा हिता न क्वचित्, सौख्याऽऽशा यदि तद्धिवेकविधिना सा त्यज्यतां त्यज्यताम् ॥१३८१॥
निषादचित्ते करुणार्द्रभावाः प्रादुर्बभूवुः परमार्थपूर्णाः। सत्संगतो दुर्जनदुष्टवृत्तिः, संस्कारितां धारयते कदाचित् ॥१३८२॥
कस्तूरिकायाः परमं सुगन्धं मुदा वहन् गन्धवहो दिगंते। प्रशस्यते मानवदेववृन्दैर्गुणो हि लोके गुणिनां गुणाय ॥१३८३॥
"रक्षकाऽनुकम्पया पल्लीतो निर्गमनम्,"

अथाऽस्तसमये जाते संतापकर वेः प्रभा । भ्रष्टराज्यनृपस्येवाऽऽतपश्च विलयंगतः । ॥ १३८४ ॥
सोऽदृश्यतोदयत्काल इव क्षीणोऽतिलोहितः । प्रतीचीवनितावक्त्रं कुंकुमाऽर्चितवद् बभौ । ॥ १३८५ ॥
नमन्तोभूरुहाः सर्वे दिवसस्याऽवसानताम् । सूचयामासुरत्यन्त-म्लानपत्रलताचयाः । ॥ १३८६ ॥
तदन्तस्थकुलायेषु विश्रामाय विहंगमाः । प्रत्याजग्मुश्च कूजन्तः सर्वदिग्भ्यः समूहतः । ॥ १३८७ ॥
" विश्लेषाकुलचक्रवाकमिथुनैरुत्पक्षमाक्रन्दितं, कारुण्यादिव मीलितासु नलिनीष्वस्तं च मित्रे गते
शोकेनैव दिङ्गनाभिरभितः श्यामायमानैर्मुखै-र्निश्वासाऽनिलधूमवर्तय इवोद्गीर्णास्तमोराजयः ॥ १३८८ ॥
मुक्तेर्निराशया सद्यो दीर्घीभूतैश्च रोदनैः । मुहूर्तमिव घस्रोऽसौ समाप्तिमगमत्तदा ॥ १३८९ ॥
शीतयन्ती क्षितिं चैव, भूषयन्ती नमस्तलम् ॥ रात्रिः समागताः रम्या प्राणिनां दुःखहारिणी ॥ १३९० ॥
मृदुना करजालेन धवलेन विधुर्धराम् ॥ सम्मार्जयन्नुदेति स्म तिलकीकृतलाञ्छनः ॥ १३९१ ॥
तदानीं तद्गुहामध्ये महान् कोलाहलोऽभवत् ॥ पिबन्तश्चैव नृत्यन्तः स्तेनाः कारागृहस्थिताः ॥ १३९२ ॥
आनन्दरससिन्धोर्हि प्लवमानाऽन्तरप्लवाः तारस्वरैर्हास्यवाद्यैः गुहां शब्दमयीं व्यधुः ॥ १३९३ ॥
यदैते तस्कराः श्रान्ताः-स्तदाऽस्मद्रक्षकेन मे ॥ संछिद्य बन्धनं भर्तुर्वभाषे हितकारिणा ॥ १३९४ ॥
" सज्जौ च भवतं शीघ्रं नयाम्यस्माद्भयस्थलात् " गुप्तरीत्या ततः सोऽस्माननयद्बहिरञ्जसा ॥ १३९५ ॥

गुप्तेऽरण्याध्वनि द्राक्स चचाल पुरतो द्वयोः । श्रमम्हर्निशं गुप्तस्थानानां ज्ञानमावहन् ॥ १३९६ ॥
प्रसारयंश्चतुर्दिक्षु दृष्टिं वन्यपथे व्रजन् । त्वराऽर्हेऽपि प्रवासेऽस्मान् व्यश्रामयत भूरिशः ॥ १३९७ ॥
घृतशस्त्राऽस्त्रसम्भारो निबद्धकटिपट्टकः परितो वीक्षमाणः स सहाऽस्माभिर्वनेऽचलत् ॥ १३९८ ॥
रवेण वृक्षतः केचिदुड्यन्ते स्म विहङ्गमाः । तत्पक्षाणां निनादश्चा–श्रूयत शुष्कपर्णवत् ॥ १३९९ ॥
आरण्यमहिषीसिंह–चित्रकाणाञ्च पक्षिणाम् । भल्लूकानां निनादाश्चाऽश्रूयन्त श्रोत्रभेदकाः ॥ १४०० ॥
घोरकान्तारमार्गेऽपि हिंसयोदरपूरकाः । किरातास्तेऽप्यदृश्यन्त भीषणाः शस्त्रपाणयः ॥ १४०१ ॥
पशुपक्ष्यादयः श्रान्ता–अभवन्निद्रितास्तदा । एतावदपि सद्भाग्य–मस्माकं दुःखिनामपि ॥ १४०२ ॥
अन्यथेदृङ्महाकष्टे पतितानां कुतः स्थितिः ? अथ द्विरदयूथेन लुप्तपुष्पफलव्रजाः ॥ १४०३ ॥
त्रोटिता भूरुहां शाखा अदृश्यन्त पदे पदे । एतैस्तथाऽन्यचिह्नैश्च जनानां पदपङ्क्तिभिः ॥ १४०४ ॥
ज्ञातमस्माभिरेतस्य वनस्यान्तः समागतः । तदैषलुण्टकोऽवादीद्–विगतावनवीथिका ॥ १४०५ ॥
इदानीं न भयं किंचि–द्युष्माकं विद्यते खलु । सन्निधावेव वर्त्तन्ते ग्रामाश्चात्राऽध्वनि त्वया ॥ १४०६ ॥
अवक्रे गम्यतां स्वीय–भार्यायुक्तेन निर्भयम् । अहमप्यन्यमार्गेण व्रजामि स्वाम्यनुज्ञया ॥ १४०७ ॥
कारागृहनिवासेन यच्च चक्रे कदर्थनाम् । निरागसोश्च युवयोर्दुर्बुद्धिदत्ततापतः ॥ १४०८ ॥

दुःखदानं च यच्चक्रे क्षन्तव्यं तत्कृपालुभिः । अज्ञानतमसाऽन्धो वै जीवश्चरति पापकम्, ॥ १४०९ ॥
तं स्तेनं स्वोपकारित्वा–त्प्रयान्तं निजवर्त्मनि । मत्स्वामी पद्मदेवोऽथ जगाद विनयान्वितः ॥ १४१० ॥
" अस्माकं कोऽपि सम्बन्धी रक्षको नाभवद्यदा । तदा प्राणप्रदानेन सर्वथोपकृता वयम् ॥ १४११ ॥
त्वयास्मज्जीवनं दत्तं स्वाम्याज्ञाऽतिक्रमादपि जीवनाशाविहीनानां कालपाशदशाजुषाम् ॥ १४१२ ॥
भवतैवाश्रयोऽदायि परोपकृतिचेतसा । आवाभ्यां ध्यातमेवासी–त्सांप्रतं मरणं ध्रुवम् ॥ १४१३ ॥
गृहीतौ मृत्युना नूनं नाऽन्यात्र विद्यते गतिः । मृत्युकाले त्वया रक्षा विहिता व्यथितात्मनाम् ॥ १४१४ ॥
सर्वेभ्योऽस्तिमहल्लोके जीवनं येन केनचित् । मृत्युभीतिर्महाभीतिरभयं सर्वतो वरम् ॥ १४१५ ॥
यमस्य रज्जुपाशोऽयं कण्ठलग्नोऽपि वारितः वत्सामिधे पुरे श्रेष्ठि–धनदेवसुतोऽस्म्यहम् ॥ १४१६ ॥
सर्वत्र बहवो लोका मत्प्रसिद्धिं विजानते " पुनरप्यब्रवीद् " भद्र ! समेहि त्वं गृहे मम ॥ १४१७ ॥
तव प्रत्युपकारेण भवेयमृणवर्जितः " तस्करोऽवग् वणिक्पुत्र ! द्रक्ष्याम्यग्रे कदाचन ॥ १४१८ ॥
मद्भर्ता च ततोऽवोचद्–दयासिन्धो ! वचः शृणु । मत्पुराऽऽगमयोगेऽहं स्मर्तव्यः शपथोऽस्ति मे ॥ १४१९ ॥
पादन्यासेन महतां पवित्रं जायते गृहम् । जीवितव्यप्रदानस्य प्रतिदानं न विद्यते ॥ १४२० ॥

परं त्वया कृपा कार्या, भवत्सेवा भवेन्मम । विधाय भवतः सेवां किंचित्कालं मयोचिताम् ॥ १४२१ ॥
मानवं भवमासाद्य सफली क्रियतां जनुः । ” सोऽवादीत् “ त्वं प्रसन्नोऽसि तेनाऽऽनन्दोऽस्ति मे महान् ॥ १४२२ ॥
निजमार्गे प्रयाणं द्राक् कुरुतं स्वयमेव भोः ! ” । गदित्वैवं स नैषादो गिरिमार्गमशिश्रियत् ॥ १४२३ ॥

विशालचित्ता विहिताऽन्यकृत्या–हृष्यन्ति चित्ते परमार्थवित्ताः ।
न ते कदाचित्प्रतिसेवनायां, मोदं वहन्ति प्रथितप्रयासाः ॥ १४२४ ॥

स्थल्यां विस्तारयुक्तायां भ्राम्याव गतसाध्वसौ । पद्धत्तिवर्जितक्ष्मायां गन्तुं शक्ता न चाऽभवम् ॥ १४२५ ॥
पदमात्रमपि श्रान्ताऽशक्ताऽशान्तमना भृशम् । पूर्वं तु प्राणरक्षायै सत्वरं प्राचलं भिया ॥ १४२६ ॥
पश्चात्तु क्षुत् तृषाक्रान्ता श्रमार्ता व्याकुला भृशम् । ततः शुष्काऽऽनना यान्ती पादन्यासमितस्ततः ॥ १४२७ ॥
कुर्वन्त्या समशक्ताऽग्रे किञ्चिच्चलितुमक्षमा । वल्लभो मां ततः कृत्वा पृष्ठे स्वीयेऽचलत्तदा ॥ १४२८ ॥
“ श्रमः स्यादिति ” विज्ञायो–त्तरन्तीं तस्य पृष्ठतः । मामाऽऽख्यत्सदयः सान्त्व–पूर्वं मदुःखपीडितः ॥ १४२९ ॥
“ शनैः शनैर्गमिष्यावो गतप्रायमिदं वनम् । गोभिः प्रतिस्थलं क्षुण्णा धरणी दृश्यतेऽधुना ॥ १४३० ॥
उत्करा अपि दृश्यन्ते गोमयानां च कुत्रचित् । ज्ञायते सन्निधौ तेन कश्चित् ग्रामो भविष्यति ॥ १४३१ ॥
इदानीं लप्स्यसे भूरि–विश्रामं त्वं वरानने ! ” । तत्क्षणान्मे भयं नष्टं मुखाऽग्रे धेनुमण्डलम् ॥ १४३२ ॥

विलोक्य मे महानन्दः समभून्मानसे तदा । पाणिगृहीतशाखाग्राः पुष्पगुच्छाऽवतंसिताः ॥ १४३३ ॥
चित्रगीतानि गायन्तो गोपबालाश्च वीक्षिताः । पप्रच्छुरुत्सुकास्तेऽपि श्रान्तौ दीर्घाऽध्वनेत्र भोः ! ॥ १४३४ ॥
कुतः समागतावत्र ? मत्स्वामी प्रोक्तवाँस्ततः । मार्गभ्रष्टा वयं जाताः किन्नामा विषयोऽस्त्ययम् ॥ १४३५ ॥
किं नाम नगरं चेदं ? भवतां नगरं च किम् । दूरं युष्मत् पुरञ्चेतः कियदस्ति महाशयाः ! ॥ १४३६ ॥
"ग्रामो नः क्षायका (खायग) ख्योऽस्ति वनस्याऽन्तोऽत्रविद्यते । किंचिदतोऽधिकं नैव जानीमो वनचारिणः ॥ १४३७ ॥
गच्छताऽनेन मार्गेण समीपे वर्तते पुरम् " । किञ्चदग्रे गतौ यावत्तदाऽऽप्ता कर्पिताधरा ॥ १४३८ ॥
तां दृष्ट्वा मत्प्रियोऽवादी-ल्लब्धस्वास्थ्यः प्रमोदभाक् । " इतो युवतयो ग्रामा-द्विनिर्गत्य च भूरुहाम् ॥ १४३९ ॥
विचेतुं फलपर्णानि व्रजन्ति वनमुत्सुकाः । श्वेतकाञ्च्याः प्रिये तासामधस्ताद्वर्तुलाः शुभा ॥ १४४० ॥
पुष्टाः पूर्वानुगा जङ्घा राजन्ते लोहितप्रभाः । चित्राचारक्षमौत्सुक्यशोभना नेत्ररोचनाः ॥ १४४१ ॥
प्रयाणजं क्लेशदं च दूरीकर्तुं मम श्रमम् । इत्थं स्निग्धवचो भङ्ग्या स्वामी मामुदलासयत् ॥ १४४२ ॥
अथ ग्रामैकदेशे च नातिदूरं स्थितं सरः । प्राप्तं श्रान्तजनोत्साह-वर्द्धकं निर्मलोदकम् ॥ १४४३ ॥
हंसकारण्डवाकीर्णं सरोजवनसुन्दरम् । स्फाटिकाऽऽभ जलव्याप्तसोपानसुभगंसरः ॥ १४४४ ॥
प्रतिबिम्बितनीलाभनभोमण्डलमुज्ज्वलम् । अम्बरं वा सरो वाऽस्ति जनानां तर्कणास्थलम् ॥ १४४५ ॥

" नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ १४४६ ॥
ग्राम्यलोकमनोऽभिष्टे सुरभीकृतदिङ्मुखे । पङ्कजश्रेणिभिः पूर्णे तस्मिन्नासन् जलेशयाः ॥ १४४७ ॥
तस्मिन्नुत्तीर्यसौरम्य-वासितं वस्त्रगालितम् । शीतलं मधुरं चेतो नयनानन्दकारक ॥ १४४८ ॥
निर्मलं वारि पीत्वा च, प्रीतिरासादितोत्तमा । ततो गाधोदकं गत्वा शीतलं सलिलं मुखे ॥ १४४९ ॥
संसिच्य चिन्तया मुक्तौ परमं मोदमाप्नुव । ग्रामं यान्तौ मुखे तस्य वृहद्वारिघटान्विताः ॥ १४५० ॥
प्रमदाः सुन्दराऽऽकारा अपश्यात्र सुलोचनाः । कटीस्थापितमृत्कुम्भाः सकङ्कणकराम्बुजैः ॥ १४५१ ॥
कुम्भकण्ठान्समावेश्य व्रजन्त्यो रेजिरे भृशम् । व्यतर्कयद्विलोक्यैदं मत्प्रियो जातकौतुकः ॥ १४५२ ॥
" एतैः कुम्भैरहो ! पुण्यं विहितं किं सुलोचने ? । यतस्ते युवती पार्श्वे संस्थिताः पुरुषा इव ॥ १४५३ ॥
एतासां सुन्दरैर्हस्तैर्गाढमालिङ्गिताः शुभा ? " । वनितास्तु तदा सर्वा निर्निमेषं सकौतुकाः ॥ १४५४ ॥
आवामेव व्यलोकन्त-गतिरोधेन वर्त्मनि । तद्ग्रामं परितो ह्यासी-द्विषमाऽपि सुशोभिता ॥ १४५५ ॥
वृतिः प्राहारिकीपङ्क्ति-रिवाऽदृश्यन्त सा स्फुटा । यतः पयोधराकार-तुम्बकानि समन्ततः ॥ १४५६ ॥
तस्यां स्थितान्यलम्बन्तविपुलाकृतिभाञ्जि वै । यत्र ग्राम्यस्त्रियोऽपश्यन्नावां दुर्भाग्यतो वृतिः ॥ १४५७ ॥
प्रागेव तत्र भग्नाऽऽसीत् तेनाऽभूत्सुखवीक्षणम् । मिथः प्रासा इव स्पर्द्धी द्रष्टुमावां समुत्सुकाः ॥ १४५८ ॥

प्रमदाः प्रपतन्तिस्म तस्यां चाभ्यन्तरस्थिताः । स्वभाराक्रान्तत्रुट्यन्ता दर्शनातुरमानसाः ॥ १४५९ ॥
कोलाहलं वितन्वन्त्यो बभञ्जुस्तां वृतिं च ताः । वृतिभङ्गोत्थनादश्च केवलो नाऽभवत्तदा ॥ १४६० ॥
द्रष्टुकामजरन्नारीर्दृष्ट्वा च कुक्कुरव्रजाः । कियन्तश्चकितास्तत्र मुखान्मुच्चैर्विधाय च ॥ १४६१ ॥
भषन्तिस्म भयाऽऽक्रान्ता विचित्रवेशदर्शिनः । अस्मान्निरीक्षमाणानां वनितानां तु काश्चन ॥ १४६२ ॥
अनारोग्याश्च विच्छाया ज्वरपीडातिदुर्बलाः । अतस्तासां कङ्कणानि शिथिलान्यभवन्करे ॥ १४६३ ॥
तत्पृष्टे श्वेतवेशाश्च पुष्टगात्र्यो मनोरमाः । आययुर्द्रष्टुकामाश्च मिथोवार्तापरायणाः ॥ १४६४ ॥
तरुण्यः कटिविन्यस्तशिशवो गृहतो बहिः । इत्थं दृश्यानि दृष्टानि त्वावाभ्यां विविधानि च ॥ युग्मम् ॥ १४६५ ॥
ग्रामरथ्या क्रमाद्‌प्राप्ता सुषमाशोभिनी ततः । यां प्राप्य मनसः स्थैर्यात् शान्तिमन्वभवाव च ॥ १४६६ ॥
गहने तु दृढं चेतो विधाय जीवनेच्छया । पादव्रणं क्षुधां तृष्णां श्रमं चागणयं नवै ॥ १४६७ ॥
साम्प्रतं तु भयाऽभावा–न्मनः शान्त्या तथैव च । क्षुधातृषाश्रमाणां मे वेदना समजायत ॥ १४६८ ॥
मया प्रोक्तं 'प्राणनाथ ! भोजनं पथिकैरिव । आवाभ्यां याचनीयं हि निर्धनानामियं स्थितिः ॥ १४६९ ॥
स्तेनाऽऽहृतसमस्तश्री–र्भर्ता प्रोक्तवान् " प्रिये ! । कुलाभिमानयुक्ता ये न सीदन्ति कदाचन ॥ १४७० ॥
अतिशोच्यदशां प्राप्ता, लज्जन्ते याचितुं कणाम् । दातुमेव हि जानन्ति न चाऽऽदातुं स्वमानिनः ॥ १४७१ ॥

विपत्तिं गता उच्चभावाः कुलीनाः, असुत्यागमेव प्रशंसन्ति सन्तः ।
न च प्रार्थनां स्वार्थहेतोः परेषा-महो ! कुर्वते ते महान्तो हि धन्याः ॥ १४७२ ॥

जनानामग्रतो गत्वा तिष्ठेयं तत्तु केवलम् । सत्वाभावप्रकाशेन व्रीडायै प्रभवेत्किल ॥ १४७३ ॥
यतो भिक्षुकवद् वृत्ति-लाभं मानान्वितो जनः । गतस्वो दुःखदग्धोऽपि वक्तुं नैव प्रगल्भते ॥ १४७४ ॥
रसनारसलोमलम्पटा, यदि लज्जावशवर्तिनी नहि। अत एव मुखेऽपि दंष्ट्रया, प्रकृतिस्तां सुतरां हि रक्षति ॥ १४७५ ॥
" दारिद्र्येण समीरिताऽपि बहुशः कण्ठं समालम्बते, कण्ठात्कष्टशतैः कथं कथमपि प्राप्नोति जिह्वातलम् ।
जिह्वाकीलककीलितेव सुदृढं तस्मान्न निर्यात्यसौ, वाणी प्राणपरिक्षयेऽपि महतां 'देहीति' नास्तीति च" ॥ १४७६ ॥
सा याचनां कथं कारं विधातुं वाञ्छति प्रिये ! ! । तथाऽपि दैन्यमुत्सृज्य कियत्कालं स्थिरा भव ॥ १४७७ ॥
त्वदर्थं दुष्करं कार्यं करिष्याम्येव यत्नतः । तावत्प्रविश रथ्याया मन्दिरे श्रमशान्तये ॥ १४७८ ॥
शीतच्छायं मनोहारि दिव्यधूपाधिवासितम् । सुधासितं पताकाभिः कलशैश्च विराजितम् ॥ १४७९ ॥
परितोऽनावृतं हृद्यं कोणेषु स्तम्भसंस्थितम् । विशालशालयोपेतं मन्दिरं तद्व्यराजत. ॥ १४८० ॥
यौवनोन्मादिनः स्वैरं लपन्तः पर्ववासरे। वनप्रान्तस्थिते तस्मिन् विटगोष्ठीं प्रकुर्वते ॥ १४८१ ॥
विश्रामार्थं च पान्थानां निर्मितं रम्यखण्डकम् । अध्वश्रममपाकर्तुं प्राविशं प्रेयसा सह ॥ १४८२ ॥

तत्र तद् ग्रामवास्तव्या गृहस्थाः कौतुकेच्छवः । श्रोतुं नवीनवृत्तान्तं, प्रमोदेन समाययुः ॥ १४८३ ॥
शिशवश्च समाजग्मुः क्रीडनाय समुत्सुकाः । कोलाहलो महानासी-ज्जनमण्डलघोषजः ॥ १४८४ ॥
स्वपतिवरशुश्रूषाकरणेकृतनिश्चयाम् । अरण्ये नियमानां च यमानां रक्षणेरताम् ॥ १४८५ ॥
सतीमतल्लिकां सीतां विख्यातां भुवनत्रये । स्वप्रकर्षं च बीजं च रक्षन्तीं ध्यानपूर्वकम् ॥ १४८६ ॥
शालिकणिशतुल्याभे निरुपद्रवशान्तिदे । स्मृत्वैकस्मिन्स्थले भर्त्रा सहिताऽहमुपाविशम् ॥ १४८७ ॥ ( विशेषकम् )
तदानीं सुन्दरः कश्चि-दारुह्य सैन्धवं हयम् । दृष्टोऽस्माभिर्युवाऽऽगच्छन्धृतस्निग्धसिताम्बरः ॥ १४८८ ॥
तस्याऽग्रतो निजा दूता जनाश्चान्ये त्वरान्विताः । चलन्ति स्म चलाऽपाङ्गा-आतप क्लान्तमस्तकाः ॥ १४८९ ॥
केनचित्पुरुषेणाऽऽसौ समायाता रहःस्थले । " पौरनारी "ति तेषां धी-र्जायेताऽऽलोक्य मां तदा ॥ १४९० ॥
सीतायाः मन्दिरेऽहं तु व्रीडाऽवनतमस्तकाः । अष्टास्त्रमण्डितस्तम्भं समाश्रित्यैव संस्थिताः ॥ १४९१ ॥
कुल्माषहस्तिनाम्ना स सीतामन्दिरमुत्तमम् । विमुच्य वामतो गच्छन् मत्स्वामिनमलोकत ॥ १४९२ ॥
तत्क्षणादेवरुद्धाश्वा-दुत्तीर्य स्वामिनो मम । निपत्य क्रमयोर्भूयः प्ररुदन्नित्यवोचतः ॥ १४९३ ॥
" चिरमस्मि स्थितो भद्र ! भवदीयनिकेतने । " मत्पतिस्तमुपालक्ष्य सहसाऽऽश्लिष्य वेगतः ॥ १४९४ ॥
गाढप्रेम्णा ततोऽपृच्छत्कुशलोदन्तमुत्सुकः । स्वजनानां वियुक्तानां मातापित्रोस्तथाऽऽत्मनः ॥ १४९५ ॥

चिरपरिचितमिष्टं प्राप्तमेकान्तमित्रं, हृदयमिदमवश्यं प्रेक्षणे सोत्सुकं स्यात् ।
तदनुविहितगाढाऽऽलिङ्गनं तत्प्रवृत्ति–श्रवणविधिसमुत्कं जायते स स्वभावात् ॥ १४९६ ॥

" कुतस्त्वमागतोऽस्यत्र ! पिताऽस्याः कुशली किमु ? । पितरौ बन्धवो मेऽपि सुहृदः सुखिनः किमु ? ॥ १४९७ ॥

मत्स्वामिनः समीपे स क्षितौ नत्वा स्थितस्ततः । स्वसव्यकरतस्तस्य गृहीत्वा वाममब्रवीत् ॥ १४९८ ॥

" नगरश्रेष्ठिना कल्ये ज्ञातं " पुत्री न वर्तते " कथां सारसिकाऽवोचत्ततो वां पूर्वजन्मनः ॥ १४९९ ॥

" सज्जीभूय कथं नष्टौ युवामि'त्यादिमूलतः । प्रोक्तं तया च स श्रेष्ठी श्रुत्वा त्वत्तातमब्रवीत् ॥ १५०० ॥

" श्रेष्ठिन् " किञ्चिन् मया क्रौर्यं कृतं तत्क्षन्तुमर्हसि । तयोः पूर्वतनं रूढं स्नेहबन्धमजानता" ॥ १५०१ ॥

एतज् ज्ञानस्य माहात्म्यं यद्विज्ञः कुरुते शुभम् । अज्ञः करोति तु फले–सन्देह एव केवलम् ॥ १५०२ ॥

जामातुर्मार्गणं तूर्णं कारय श्रेष्ठिपुङ्गव ! । आगच्छतु सुखेनैष मत्तो नास्ति भयं क्वचित् ॥ १५०३ ॥

स युवा दैन्यमापन्नः परदेशनिवासिनाम् । व्यवहारा न जानानः कां दशामाप्नवान्भवेत् ? ॥ १६०४ ॥

ततस्त्वज्जनकस्याऽग्रे युवयोः पूर्वजन्मनः । वृत्तान्तं कथयामास साद्यन्तं सकलं क्रमात् ॥ १६०५ ॥

जननी पुत्रवात्सल्यात् त्वद्वियोगभृशार्दिता । दुःखोदधौ निमग्नाऽश्रु–न्मुक्तकंठं रुरोद च ॥ १५०६ ॥

समीपस्थजनाः सर्वे तद्दुःखेनाऽतिदुखिताः । रुरुदुर्भृशमुद्विग्ना–श्चिन्ताक्लान्तहृदम्बुजाः ॥ १५०७ ॥

समस्तवत्सपुर्यान्तु सर्वत्र जनतामुखात् । वृतान्तमेतद्विख्यातं त्वदीयपूर्वजन्मनः ॥ १५०८ ॥
नगरश्रेष्ठिनः पुत्री श्रेष्ठिपुत्रश्च स्वां कथाम् । प्राग्भवीयां स्मृतिं लब्ध्वाऽजानीतां प्रेमपूरिताम् ॥ १५०९ ॥
वार्ताऽपि कौतुकैर्युक्ता सलिले तैलबिन्दुवत् । सद्यः प्रसरति क्ष्मायां लोकाल्लोकं समन्ततः ॥ १५१० ॥

" वार्ता च कौतुकवती, विमला च विद्या, लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य विन्दुरिव वारिणि दुर्निवार–मेतत् त्रयं प्रसरति स्वयमेव भूमौ ॥ १५११ ॥
आश्चर्यकारककथा, कमलाऽकलंका, विद्याऽनवद्यजनमानसवासिता च ।
कस्तूरिका परिमलो विमलः कदाचित्तिष्ठेच्चतुष्टयमिदं भुवि गोपितं नो ॥ १५१२ ॥

उभाभ्यां श्रेष्ठिभार्याभ्यां युष्मदन्वेषणाय वै । परितोऽनेकपुरुषाः प्रहिताः सन्ति साम्प्रतम् ॥ १५१३ ॥
प्रेषितोऽहमपि क्षिप्रं प्रणाशकपुरं प्रति । युष्मदन्वेषणायैव शीघ्रं वार्तोपलब्धये ॥ १५१४ ॥
यतो मज्जनकस्यास्ति वसतिह्यात्मसिद्धये । वृत्तान्तं युवयोस्तत्र किञ्चिन्नैवोपलब्धवान् ॥ १५१५ ॥
तथाऽपि ध्यातवांस्तत्र स्वकीयमानसे ततः । " विनष्टसंपदो ये स्युर्-ये च कष्टवशं गताः ॥ १५१६ ॥
सापराधाश्च ये लोका ये च शिक्षितकार्मणाः । ते भ्रमन्ति वनस्थल्यां निजकार्यचिकीर्षया ॥ १५१७ ॥
ततोऽहं तादृशस्थानं पर्यटन् दृष्टिपूर्वकम् । अत्राऽऽगतोऽस्मि दैवेन श्रमो मे सफलीकृतः ॥ १५१८ ॥

श्रममिलितसुविद्या कष्टलब्धाकला च, बलविभवविभूतिप्राप्तराज्याऽधिकाराः ।
इति गुणिगुणसङ्घो नो यथार्थोऽस्ति तावन्, नहि भवति च यावत्स्वाभिलाषस्य पूर्त्तिः ॥ १५१९ ॥

कृता तपस्या गुरवश्च लब्धा मन्त्रोऽप्यवाप्तो विहिताश्च सिद्धिः ।
स्वसाज्जगत् किंत्वफलं समस्तं न चेत्कृतोदुःखविमुक्त्युपायः ॥ १५२० ॥

उभाभ्यां श्रेष्ठिवर्याभ्यां लिखिते निजपाणितः । पत्रे च प्रहिते त्वं हि गृहाण पुरुषोत्तम ! " ॥ १५२१ ॥

इति तस्य वचः श्रुत्वा मद्भर्ता नतमस्तकः । सन्देशपत्रिके लात्वा स्वमित्रं स व्यजिज्ञपत् ॥ १५२२ ॥

" सा श्रमव्यपनोदाय, शीतच्छायतरोस्तले । उपविष्टाऽस्ति चिन्तार्ता मोदयैतेन तां द्रुतम् " ॥ १५२३ ॥

वाचयित्वा शनैः पत्रं गोप्यगोपनकाम्यया । स्पष्टं ततोऽपठत्तार–स्वरेण मत्पतिर्मुदा ॥ १५२४ ॥

तेनाऽहमपि तद्वृत्तं ज्ञातवत्यखिलं स्फुटम् । विनाक्रोधेन पत्रे ते लिखितेऽभवतां ध्रुवम् ॥ १५२५ ॥

प्रेमभावः स्फुटस्तत्र दर्शितोऽभूत्पुनः पुनः । " गृहमागम्यतां शीघ्र–मि " त्यौत्सुक्यश्च दर्शितम् ॥ १५२६ ॥

तेन मे सकला चिन्ता विनष्टा सहसाऽन्तरात् । महानन्दमयं जातं मनो दुःख विनिर्गमात् ॥ १५२७ ॥

कुरमाषहस्तिना पश्चाद्भर्तुर्हस्तौ विलोकतौ । आस्तां घर्षणया पूर्णौ यौ रज्वा दृढबन्धनात् ॥ १५२८ ॥

रूपान्तरं समापन्नौ संजातशोफविकृती । मल्लयुद्धसमभ्यासात्परां पुष्टिं गताविव ॥ १५२९ ॥

ततः सोऽचीकथद्विज्ञ–स्तं धीरं समयोचितम् । " सुभटस्यैव भवतः करौ हस्तिकराविव ॥ १५३० ॥
बलिष्ठौ बहुभिर्घातैर्विभिन्नौ विपुलौ तथा । " मयेति श्रुतमेत्तद्वै सत्यमस्ति किमुत्तम ? ॥ १५३१ ॥
अथ स्तेनगुहामध्येऽनुभूतं दुःखमुत्कटम् । तत्सर्वं कथितं तस्मै मरणोपममन्वहम् ॥ १५३२ ॥

" नवनवसुखभाजां विस्मृतप्राक्कृतीनां, भवति च सहसा यद्दुःखजातं त्वसह्यम् ।
अपसरति तदीयोऽसह्यदुःखाच्च मृत्युः, ननु कथमुपमा स्यान्मृत्युना कालिकेन ॥ १५३३ ॥
इह जगति समग्रे जन्ममृत्यू च दुःखं, जननसुखितलोका दुःखिपुत्रं हसन्ति ।
मृतिसमयमुपेताः स्वे जनाः संरुदन्ति, विगतसकलबन्धो मोदते धन्य एकः " ॥ १५३४ ॥

ततः स ग्राममुख्यस्य शुद्धाचारवतो गृहे । विप्रस्य कस्यचिन्नीन्ये ततो विश्रामहेतवे ॥ १५३५ ॥
विप्रः स चोत्तमौ नौ हि विज्ञायाऽऽदरमातनोत् । विप्रवत्तत् कुटुम्बेऽस्म–त्सत्कृतिः समभूद्वरा ॥ १५३६ ॥
यथेच्छं स्वच्छपानीयं पीतं द्वाभ्यां सुशीतलम् । हस्तादि क्षालनार्थं च लब्धं स्वच्छं तथोदकम् ॥ १५३७ ॥
ततोऽञ्जसा वरं भोज्यं भुक्तं तृप्तिविधायकम् । ईदृग्पुण्यप्रसादेन स्तुवन्तौ तं मुहुर्मुहुः ॥ १५३८ ॥
मुखं हस्तौ च शुद्धेन प्रक्षाल्य वारिणा ततः । अस्मत्पादव्रणे सर्पि–रुष्णं मुक्तं च शान्तये ॥ १५३९ ॥
अथ तस्य कुटुंबस्य गृहीत्वाऽऽज्ञां विनिर्गतौ । आवां तत्स्थानतः स्वीयधामप्राप्तिसमीहया ॥ १५४० ॥

एवम्पुनः स्वस्थदेहा–चारुह्य घोटकौ मुदा । ततः संचालितावग्रे कुल्माषहस्तिना सह ॥ १५४१ ॥
अन्ये भृत्यजनास्तूर्ण–मस्मत्पृष्ठानुसारिणः । निजं धामसमुद्दिश्य लग्नाः सं चालितुं रयात् ॥ १५४२ ॥
प्रणाशक–पुरं पूर्वं प्रस्थिताः सकला वयम् । भुवो भूषणवद्रम्यं पद्मवासगृहोपमम् ॥ १५४३ ॥
मीलितुं स्वसखीं वेगाद् चलन्तीं निम्नवाहिनीम् । निर्मलाम्बुभृतां तीर्त्वा तमसां सरितं वयम् ॥ १५४४ ॥
शोकप्रणाशकं रम्यं प्रणाशकविभूषितम् । प्राप्नुमः संगमस्थानं त्रिभागशेषवासरे ॥ १५४५ ॥
रंहसा राजमार्गेण कुल्माषहस्तिदर्शितम् । कुलमित्रसुसम्बन्धि –गृहं प्राप्तास्ततो वयम् ॥ १५४६ ॥
तैलाभ्यङ्गोत्तरं स्नान–भोजनाभ्यां समादरात् । अस्माकं सत्कृतिः श्रस्ता विहिता सज्जनैश्च तैः ॥ १५४७ ॥
अस्तं गते दिवानाथे निश्चिनिद्रासुखं परम् । श्रान्त्या तत्रानुभूतं च सुदैवे सुलभं समम् ॥ १५४८ ॥
शुभसमय उपेते योग आयाति योग्यः, मिलति सकलभोग्यं जायतेऽनिष्टनाशः
किमिह ननु विचित्रं तत्सुकृत्यं प्रभावः, सुकृतरतजनानां शत्रवो यान्ति मैत्रीम् ॥ १५४९ ॥
प्रभाते च समुत्थाय परमेष्ठि नमस्कृतिम् । शौचस्नाने तथा कृत्वा देवपूजा ततः कृताः ॥ १५५० ॥
श्रमक्षुधाभयान्मुक्तौ पुनः शयनमन्दिरे सुप्तावास्तरणो तूल–गर्भे सुखविधायके ॥ १५५१ ॥
कुल्माषहस्तिना तावद्–" द्रागच्छामः पुरीं प्रति । विलिख्य प्रेषितं पत्रमित्यस्मज्जनकान्तिके ॥ १५५२ ॥

यावत्कालं स्थितौ तत्र तावत्तद्गृहमानवैः । योग्यवस्तुभिरस्माकं पुष्ट्यर्थं विहितश्रमः ॥ १५५३ ॥
कियद्दिवसेषु यातेषु लब्धस्वास्थ्या वयं तदा । कौशाम्बीं गमनायेच्छां प्रादर्शयमसस्पृहम् ॥ १५५४ ॥
प्रयाणसमयेऽस्माभि-र्योषिद्भिर्वारितैरपि । कार्षापणसहस्रं हि शिशुभ्यो दत्तमादरात् ॥ १५५५ ॥
" प्रतिदानसमीहाभिर्विवर्जितं यस्य मानसम् । प्रदानं तेन विहितं सफलं शोभनायति ॥ १५५६ ॥
अस्मदर्थं कृतो द्रव्य-व्ययोः सकलः खलु । अस्मद्दत्तधनेनैव गच्छेन्निर्मूलतां यतः ॥ १५५७ ॥
तावद्द्रव्यप्रदानेऽपि भर्ता तु लज्जितोऽभवत् । यतस्तथाविधस्नेहमूल्यं तल्लब्धमन्यतः ॥ १५५८ ॥
मूल्यं स्नेहस्य विज्ञा विदधति सदृशं नैव जानन्ति सर्वे, सम्यग् दानेप्यतृप्ता ह्रियमति दधते स्वामशक्ति स्मरन्तः ।
शुद्धस्नेहे न भेदः क्व पुनरितरता किं सुखं किं च दुःखं स्वैकात्म्येनैव सर्वेह्यनुभवति सुखं किं न लोकोत्तरं तत् ॥
उपकृतिरिति धर्मो जन्मसिद्धो जनानां मिथ उपकृतिबद्धं विश्वमेतत्समस्तम् ।
जगति तदनृणार्थं भव्य जीवा यतन्ते, परमनुगुणदानाभावतः संकुचन्ति ॥ १५६० ॥
बहुप्रदैको ह्रियमेति दाने गृह्णँस्तथाऽन्यो बहुमन्यते च । लज्जा तयोः स्नेहमनन्यतुल्यं व्यनक्ति तत्सत्पुरुषैर्हि वेद्यम् ॥
तादृग्वार्ताप्रसङ्गेऽपि तस्य क्षुब्धं मनोभवत् । प्रयाणसमये चाहं स्त्रीभिः सम्भाषणं व्यधाम् । ॥ १५६२ ॥
मद्भर्ता पुरुषैः सार्द्धं प्रयाणोचितवाचिकम् । विहितं प्रेमतः सुष्ठु शिष्टाऽऽचारानुरोधतः ॥ १५६३ ॥

" ज्ञानवृद्धा वयोवृद्धा गुणवृद्धा विपश्चितः । सदा चरन्ति यं धर्मे शिष्टाचारः स उच्यते ॥ १५६४ ॥

शिष्टत्वं लोकमूलं स्थिरकरणगुणं दुर्जना न क्षमन्ते, जानन्तश्चेति दुष्टैः पुनरतिमृदिताः साधवो न त्यजन्ति ।
सत्कार्योऽरिः सुहृद् वा स्वगृहमुपगतः शिष्टतामार्ग एष, चण्डालानां द्विजानां च सदसि सदृशोद्योतकः पद्मपाणिः "॥

प्रवासयोग्यवस्तूनि सकलान्यौषधानि च । गृहितानि समं येन वर्त्मनि नो क्षतिर्भवेत् ॥ १५६६ ॥

मद्भर्ताऽथ समारूढ-वराश्वः स्यन्दनं मम । अन्वगच्छल्लसद्वक्त्रो मद्रक्षैकपरायणः ॥ १५६७ ॥

वत्सलैः पितृभिर्यैस्तु प्रहिताः किङ्करास्तथा । तैः सार्द्धमागतो बन्धु-रिव कुल्माषहस्त्यपि ॥ १५६८ ॥

मानवास्तस्य चाऽन्येऽपि परितो मद्रथं तदा । परिवृत्य चलन्तिस्म कौशाम्ब्याः समुपागताः ॥ १५६९ ॥

तथैव सुभटाः केचि-द्रणेषु लब्धकीर्त्तयः । वहवो मत्पुरोभागे रक्षणायाऽचलंस्तथा ॥ १५७० ॥

प्रणाशक पुरस्येव व्रजन्तश्च त्वराऽध्वना । जनानानन्दयन्तश्च पुरात्तस्माद्विनिर्गताः ॥ १५७१ ॥

तदानीं चकिताः सर्वे पुरलोका नीरीक्षणात् । अस्माकं वैभवोस्योच्चैः निर्निमेषक्षणा बभुः ॥ १५७२ ॥

आकस्मिकप्राप्तमदृष्टपूर्वं, जनोवहन्कौतुकमित्थमेकम् । विहाय सर्वं च हितं स्वकीयं, तन्निष्ठबुद्ध्या सहसा प्रयाति ॥ १५७३ ॥

अस्मिन्मित्रस्य चाऽस्माकं परिवारेण संयुताः । अतुलेन वैभवेन वयं तस्माद्विनिर्गताः ॥ १५७४ ॥

राजमार्गे समागच्छ-ज्जनैः संभूय लक्षशः । अस्मच्छ्लाघां प्रकुर्वद्भिर्मुदितैश्च विलोकितम् ॥ १५७५ ॥

मद्भर्ता स्तम्भयित्वाऽथ सारथिना रथं मम । मत्सन्निधौ समागत्य निषसाद प्रमोदतः ॥ १५७६ ॥

लक्षितानेव द्रष्टव्यस्थानः सर्वर्द्धिराजितः । ततोऽस्मरसार्थं इष्टार्थोऽचलदग्रे यथेच्छया ॥ १५७७ ॥
शालिक्षेत्राणि मार्गेषु विश्रमस्थण्डिलानि च । प्रपावृन्दञ्च पश्यन्तो व्रजन्तश्च शनैः शनैः ॥ १५७८ ॥
वासिलाकाऽभिधग्रामं प्राप्तास्तत्र वटोऽभवत् । गिरिसानुसमं तञ्च विलोक्यानन्दमाप्नुमः ॥ १५७९ ॥
स च वृक्षोऽभवत्पान्थहृदयान्ददायकः । हरित्पर्णततिच्छन्न–मध्यस्थितवयोव्रजः ॥ १५८० ॥
न्यग्रोधं तं समालोक्य कुल्माषहस्त्यचीकथत् । " तीर्थंकरो वर्धमानो निर्ग्रन्थधर्मदेशकः ॥ १५८१ ॥
शीलसंवरसंयुक्तः छद्मस्थो विहरन्भुवि । सज्ज्ञानभास्करोद्योत–नाशितान्तस्तमोव्रजः ॥ १५८२ ॥
त्यक्तसंसारवासोऽस्मिन्पुरा वासपरोभवत् । भूमिकेयं ततः ख्याता वासालिकाख्यया जनैः ॥ १५८३ ॥
सर्वज्ञस्मरणायातो देवकिन्नरमानवाः । न्यग्रोधमेतं बहवः पूजयन्ति समुत्सुकाः " ॥ १५८४ ॥
एतद्वचः समाकर्ण्य पूज्यभावेन मोदतः । आवां रथात्समुत्तीर्णौ तीर्थदर्शनकाङ्क्षया ॥ १५८५ ॥
" तपस्यया पूर्णपवित्रितानां, दयाधनानां शुभसत्यवाचाम् । ज्ञानात्मनां यत्र भवेत्प्रवृत्तिः तीर्थंहि तत् शुद्धिकरं तदीड्यम् "॥
न्यग्रोधमूलमास्पृश्य भालेन नम्रतायुतौ । प्राप्नुव जन्मसाफल्यं श्रद्धयाऽपूर्वया स्वतः ॥ १५८७ ॥
कृत्वाञ्जलिं मया प्रोक्तं–" महाभागाऽङ्घ्रिपोत्तम ! । धन्योसि,त्वं यतो वीत–रागस्त्वच्छायसंस्थितः ॥ १५८८ ॥
न्यग्रोधमिति संस्तुत्य त्रिःप्रदक्षिणपूर्वकम् । स्वस्थीभूयाऽप्रतोगन्तुं पुनःस्यन्दनमास्थितौ ॥ १५८९ ॥
वर्द्धमानजिनो यत्र न्यवसच्छान्तिपूर्वकम् । तद्भूमिदर्शनान्मोदो ममाऽभून्मानसे बहुः ॥ १५९० ॥

चिरकालं च तद्ध्याने निमग्ना भक्तिभावतः । उत्तरङ्गप्रमोदाऽब्धिं तरितुं न क्षमाऽभवम्
भर्तृपार्श्वस्थिता मार्गे गृहिण्याः सुखमुत्तमम् । अनुभवन्त्यहं काली–ग्राममुल्लङ्घ्य मोदतः ॥ १५९१ ॥
अग्रतोऽगच्छमुत्फुल्ला वार्ताऽऽलापपरायणा । पश्यन्ती नूतनान्वृक्षान् सुरभीकृतभूतलान् ॥ १५९२ ॥
निशाऽऽत्रासप्रहायाऽथ शाखाञ्जनपूरीं गताः । सौधैरभ्रंलिहै रम्यै राजितां वयमुत्तमा ॥ १५९३ ॥
तत्र मत्स्वामिमित्रस्य कैलासशिखरोपमे । प्रासादे संस्थिताः सर्वे वयं तत्पुरभूषणे ॥ १५९४ ॥
आकस्मिकेऽतिविषमे व्यसने निमग्नं, बन्धप्रहारकृतलक्षणलक्षिताङ्गम् । ॥ १५९५ ॥
दृष्ट्वा स्ववेश्मनि समागतमिष्टमित्रं, कैश्चित्सहेति सहसाऽभिजगाम मोदात्
स्नानभोजनपानादिव्यवस्था विहिता वरा । अस्मत्सार्थजनाःसर्वे भोजितास्तेन भावतः ॥ १५९६ ॥
बलीवर्दौ च घासेन तोषितौ गृहमेधिना । इत्थं सुखेन सा रात्रि–र्यापिताऽस्माभिरुत्सवात् ॥ १५९७ ॥
नमस्कृतिमथ स्मृत्वा, उत्थाय शयनाच्छनैः । आवश्यकीक्रियां कृत्वा, शौचस्नानादिकं पुनः
मनसा जिनपूजां च स्वाध्यायं गुरवे नमः । भुक्त्वा मित्रमनुज्ञाप्य प्रस्थिता उदिते रवौ
विविधालिविहंगानां मण्डलान्यभ्रचारिणाम् । कुर्वतां मधुरध्वानमदृश्यन्त समन्ततः ॥ १५९८ ॥
वार्तालापं प्रकुर्वद्भि–रस्माभी रथमाश्रितैः । " नैव ज्ञातं कियानध्वाऽतिक्रान्त " इति मोदतः ॥ १५९९ ॥
कुल्माषहस्तिना पूर्वं वर्णिता ये तथैव ते । पत्तनग्राममार्गादिचिह्नरूपमहीरुहाः ॥ १६०० ॥
॥ १६०१ ॥

अस्माभिर्दूरतो दृष्टाः पवित्राः सुमनोहराः । पुनर्विलोकितः शाखा–मण्डितो वटपादपः ॥ १६०२ ॥
तदान्तिकत्वमापन्नैरस्माभिर्हरितैःदलैः । विशालः श्यामलो भूमेर्वक्षोज इत्यतर्क्यत ॥ १६०३ ॥
सार्थस्य पथिकानां च विश्रमस्थानमद्भुतम् । मार्गालङ्कारभूतोऽभू–च्छायामण्डलशोभितः ॥ १६०४ ॥
कौशाम्बीसीमदेशस्य परां शोभां विवर्द्धयन् । स्तम्बेषु विटपानां च पक्षिसङ्घैर्विराजितः ॥ १६०५ ॥
सुरभिपुष्पजालानां कलिका रम्यकान्तयः । मनोहरा मनो नृणां हरन्तिस्म सकौतुकम् ॥ १६०६ ॥
ऊर्ध्वदेशे शरन्मेघ इव श्वेतपटावलिः । व्यराजत्तदधो नीरपूरिता मृदघटा अपि ॥ १६०७ ॥
मित्रसम्बन्धिवर्गैश्च तद्देशं समुपागतैः । वयं वर्द्धापिता भूयोऽनेकाऽऽशीर्वादपूर्वकम् ॥ १६०८ ॥
मुखेन कमलं दृशा चलझषौ कचानां चये भ्रमद्भ्रमरभारकं शिरसि वारिपूर्णं घटम् ॥ १६०९ ॥
इयं युवतिमण्डली शुभकुन्नं वहन्ती सती, पुरो भवति यस्य तस्य पूर्णं हि सर्वेऽप्सितम् ॥ १६१० ॥
ऋषभदेवजिनेश्वरमन्दिरं, विविधपुष्पलतोपवनं वरम् । विकचकञ्जसुशोभिसरोवरं परिसरेऽस्ति मनोहरमङ्गलम् ॥ १६११ ॥
अकस्मात्कुम्भसंशोभी, राजहस्ती समाययौ । गर्जन्मन्दगर्जाभिः स्वागतमनुमोदयन् ॥ १६१२ ॥
हंसानां कूजनं वापी–तीरसामीप्यसेविनाम् । सर्वमङ्गलमेवाऽऽसी–द्दधिदुर्वाऽक्षताऽऽदिभिः ॥ १६१३ ॥
प्रतिसुरवरगेहं कांस्यघण्टानिनाद–स्तदनु सविधिपूजापद्धतिर्गौरवेण ।
क्वचिदपि नृपमान्या एत्य नो मानयन्तः, स्वजनपरिवृतानां सर्वमस्माकमिष्टम् ॥ १६१४ ॥

विहितं स्वच्छनीरेण सर्वैः स्नानं सुखावहम् । तेनाऽस्माकं श्रमो नश्यदध्वश्रमसमुद्भवः ॥ १६१५ ॥

" स्नानं नाम मनः प्रसादजननं दुःस्वप्नविध्वंसनं, सौभाग्याऽऽयतनं मलाऽपहरणं संवर्धनं तेजसः ।

रूपोद्योतकरं शिरःसुखकरं कामाग्निसंदीपनं, स्त्रीणां मन्मथमोहनं श्रमहरं स्नाने दशैतेगुणाः " ॥ १६१६ ॥

ततो मत्स्वामिवर्ग्यास्तान्मिलित्वा तत्र संस्थिताः । वयं मोदभराऽऽक्रान्ताः सिद्धसर्वसमीहिताः ॥ १६२७ ॥

अहं त्यक्त्वा रथं तस्मात्स्थलाच्छ्रेष्ठतुरङ्गमम् । आरुढा सज्जपर्याणं प्रयाणं कर्तुमारभे ॥ १६१८ ॥

मामनुस्नेहसम्बद्धा सारसिका समागता । मीलितुं, मम धात्र्यश्च दास्यः चेलुर्युवव्रजाः ॥ १६१९ ॥

अन्योप्यन्वचलत्सार्थः स्वस्ववर्गं समन्वितः । सुवर्णस्यन्दनाऽऽरूढो निजमित्रेण संयुतः ॥ १६२० ॥

मत्पतिस्तु विशेषेण मत्पार्श्वं नाऽमुचत्क्षणम् । संभूय परिवारेण ननादृणां व्रजस्तथा ॥ १६२१ ॥

भ्रातृपत्न्यः स्वदासीभी रम्यगन्त्रीरथेषु च । निषण्णा हर्षमापन्ना, अन्वगच्छन्पुरं प्रति ॥ १६२२ ॥

" विख्यातस्य मनुष्यस्य सुखदुःखे गमाऽऽगमौ । प्रवासं च परावृत्तिं सद्यो जानन्ति देहिनः " ॥ १६२३ ॥

त्वरयाऽस्मृत्कृते जातं तोरणद्वारमुत्तमम् । समुल्लङ्घ्य पुरीं श्रेष्ठां कौशाम्बीं प्राविशाम वै ॥ १६२४ ॥

तदानीं दक्षिणे भागे नरपक्षिरवःश्रुतः । शुभेन शकुनेनेत्थं महानन्दोऽभ्यजायत ॥ १६२५ ॥

यस्मिन्वयं समायाता राजमार्गः स भूषितः । सुरभिश्वेतपुष्पौघै–रस्मत्सत्कारहेतवे ॥ १६२६ ॥

तद्दूरद्वयपार्श्वस्थ–खचुम्बि हर्म्यराजिषु । रम्यहट्टप्रदेशेषु प्रेक्षणोत्सुकचेतसाम् ॥ १६२७ ॥
नारीणां पुरुषाणाञ्च मण्डलानि पदे पदे । सम्भूय नम्र मानार्थे तिष्ठन्तिस्म सकौतुकम् ॥ १६२८ ॥
वातधूतसरोजानां व्रजो निम्नोन्नतो यथा । लोकवक्त्राम्बुजश्रेणी तथैव सा व्यराजत ॥ १६२९ ॥
मद्भर्तुर्मानदानाय राजमार्गस्थमानवाः । स्नेहदृष्ट्याऽभिपश्यन्तो नमस्कारानपि व्यधुः ॥ १६३० ॥
मेघत्यक्तशरच्चन्द्रमिव प्रत्यागतौ पुनः । विलोक्य नौ समेषां हि प्रमोदो न ममौ हृदि ॥ १६३१ ॥
विना यथैकेन न जीवनं स्यादन्यस्य तत्प्रीतिवशंवदस्य । तयोः कृते चिन्तितमानसानां, प्राप्ताऽव्यमानो हि भवेत् प्रमोदः ॥
विशेषतो ब्राह्मणाश्च ददुराशीर्वचो मुहुः । विपुलानन्दप्रोत्फुल्ल–मानसा शुद्धभावतः ॥ १६३३ ॥
ब्राह्मणश्रमणान्पूज्यान् ननाम मत्पतिस्ततः । मित्राण्यालिङ्गयामास परांश्च समभावयत् ॥ १६३४ ॥
" समतासंयमापन्ना धर्मतत्त्वप्रबोधकाः । मोक्षमार्गस्थिता नूनमावाभ्यां गुरवोऽर्चिताः ॥ १६३५ ॥
आर्यवेदविदो जनसिद्धान्त प्रीतिसम्भृताः । द्विजास्ते वन्दिता ब्रह्मविदोऽर्हद्ध्यानतत्पराः ॥ १६३६ ॥
ब्रह्मतत्त्वस्य ज्ञातारोऽध्यात्मविद्यासु कर्मठाः । संतोषपूर्णचैतन्या ब्राह्मणास्ते प्रकीर्तिताः " ॥ १६३७ ॥
"ये शान्तदान्ताः श्रुतिपूर्णकर्णाः, जितेन्द्रियाः प्राणिवधान्निवृत्ताः । परिग्रहे संकुचिता गृहस्था–स्ते ब्राह्मणास्तारयितुं समर्थाः"॥
सुखदुःखसमप्रीतिबद्धकक्षः सुहृद्गणः विप्रयोगविदीर्णात्माऽऽलिङ्गितः प्रेमभृन्मनाः" ॥ १६३९ ॥

निरीक्ष्याऽत्रां जनाः केचि-द्वदन्तिस्म परस्परम् । " श्रेष्ठिहर्म्यस्य भित्तौ यश्चित्रेषु चित्रितः स्फुटम् ॥ १६४० ॥
व्याधेन यो हतः सैव, चक्रवाकः नरोऽस्त्ययम् । दैवायत्तं जगत्सर्वं सुखंःदुखं तथाऽश्नुते ॥ १६४१ ॥

कृतबहुसुकृतानामागमज्ञानभाजां, जितसकलधराणां दोष्मतां वा नृपाणाम् ।
नृपनलप्रभृतीनां वीक्ष्य दुर्दैवमस्मिन् जगति भवति सर्वं दैवसात्कार्यजातम् ॥ १६४२ ॥

चित्रिता चक्रवाकी या सती भूत्वाऽथ श्रेष्ठिनः । पुत्रीत्वेन समुत्पन्ना धनस्याऽस्य च सा वधूः ॥ १६४३ ॥
दैवेनैतावुभौ चित्रे वर्तमानौ मनोरमौ । योजितौ कीदृशौ भव्यौ विराजेते परस्परम् ? ॥ १६४४ ॥
केचिदन्ये वदन्तिस्म " युवायं सुन्दराकृतिः । स्मित्वान्यश्चावदद्-"हृद्यं सत्यमेव भवद्वचः ॥ १६४५ ॥
मीलितं मिथुनं कीदृक् कन्यायोग्योऽस्त्ययं वरः । कलाकलापपारीणो राजतेऽसौ युवा ध्रुवम् " ॥ १६४६ ॥
एवं पृथक् पृथग् रीत्या तदा सर्वेऽपि देहिनः । वर्णयामासुरानन्दात् स्वामिनं मम शोभनम् ॥ १६४७ ॥
ततः शनैः शनै रम्ये तत्प्रासादे समागतौ । वारिणा दासदत्तेन पादप्रक्षालनं कृतम् ॥ १६४८ ॥
पवित्रभाजनाद्दासैर्दधिपुष्पाक्षतैस्तदा । प्रदत्तैर्देवपूजा च विहिताऽस्माभिरुत्सवात् ॥ १६४९ ॥
ततोऽसमर्घ्यं सरोजानां कन्दुका मालिकास्तथा । अर्पिताः 'स्वामिना सार्द्धं ततोऽहं द्वारमाविशम् ॥ १६५० ॥
विस्मृत्याऽनुप्रयान्तीष-दन्तरं प्राप्य वेगतः । सत्वरं सङ्गता भर्त्रा "नेष्टमिष्टेन हीयते" ॥ १६५१ ॥

चतुष्कं रम्यहर्म्यस्य जनाकीर्णं च सुन्दरम् । विशालं स्वामिना साकं प्राविशं हर्षपूरिता ॥ १६५२ ॥
मत्पिता हर्षसंफुल्लः स्वकुटुम्बिजनैः सह । प्रागेवाऽऽगत्य तत्स्थाने मञ्चिकायामुपाविशत् ॥ १६५३ ॥
किञ्चित्सङ्कोचमञ्चन्तौ पूज्यानां पादयोः शिरः । अमुचाव पृथूत्साहौ चिरकालवियोगिनौ ॥ १६५४ ॥
अपराधकृतौ विधेर्जातसहसा तत्परतोऽनुशेरते । तत एव महानिद्राऽल्पकः समयोऽयं धिषणासु जायते ॥ १६५५ ॥
नहि तत्पदवन्दनादृते सदुपायो भुवि कोऽपि वर्तते । सुतरां कृपयैकवत्सलाः सुसहन्तेऽप्यपराधसन्ततिम् ॥ १६५६ ॥
देवैरिव दयावद्भिरेतैः स्नेहार्द्रमानसैः । दृष्ट्या विलोकितौ भूयश्चाश्लिष्टौ चुम्बितं शिरः ॥ १५५७ ॥
तेषां नेत्राणि हर्षाश्रु–धारया संकुलानि वै । चिरमस्मान्व्यलोकन्त निर्निमेषतया मुहुः ॥ १६५८ ॥
मम श्वश्रूश्च मन्माता हृदयोत्साहतो दृढम् । मां समालिङ्ग्य संजाते साश्रुलोचनवारिजे ॥ १६५९ ॥
चिरकालवियोगेन स्तनेभ्यो दुग्धसन्ततिः । निःससार दृढस्नेहं दर्शयन्ती द्वयोस्तयोः ॥ १६६० ॥

मातुः परं प्रेम यथास्त्यपत्ये, तथा न चाऽन्यत्र पितुस्तथा न ।
स्वभावतः पश्यति पुण्यभाजां, मातेव नान्यः समवायिवर्गः ॥ १६६१ ॥

ततोऽहं निजबन्धूना–मष्टानां क्रमतः क्रमात् । भक्तिभावितचित्तेन प्राणमं नम्रमस्तका ॥ १६६२ ॥
तदा तेषामपि प्रेम्णा नेत्रेभ्यःस्रवदश्रुभिः । आर्द्राणि हृदयान्यासन् 'स्नेहिनामीदृशी स्थितिः' ॥ १६६३ ॥
यानस्मार्ष मदीयास्ते स्नेहिनोऽन्ये समागमन् । दीर्घकालवियोगेऽपि शुद्धप्रेम न हीयते ॥ १६६४ ॥

दूरोऽपिदेशः समयश्च शुद्ध–प्रेम्णां न किंचित्कुरुतेऽन्तरायम्। कंजाय सूर्यः स्ववियुक्तभर्त्रे सतां यथा प्रेमदृढं करोति
सारसिका निरुद्धा ये पूर्वं नेत्राश्रुबिन्दवः। तेऽपीदानीं व्यमुच्यन्त स्मृत्वा दुःखं वियोगजम् ॥ १६६६ ॥
मङ्गलक्षतिभयेन नेत्रयोरश्रुरोधनपरा नरा वराः। किन्तु तद्विरहरोगबाधिता नो विदन्ति च कृताऽकृतोऽचितीम् ॥
तत्तु तस्याः क्षणाद्दुःखं न क्षमं शमितुं खलु। विभाति स्म हिमक्लिन्नपद्मरेखेव सा तदा ॥ १६६७ ॥
महेभ्यानां समादेशात् प्राभृतसमयोचितः। समानीतो घटश्चैकः सर्वमङ्गलसाधकः ॥ १६६८ ॥
अस्मासु विष्टरस्थेषु तावत्कालं कथानकम्। अस्माकं प्रष्टुमारेभे, सर्वसम्बन्धिनां गणः ॥ १६६९ ॥
ततो मत्स्वामिना सर्वः कृतो योऽनुभवः पुरा। दुःखमूलः क्रमेणैषां साद्यन्तः स निवेदितः ॥ १६७० ॥
दुःखप्रहाणाय परस्परस्य, सदा प्रयासं कुरुते मनुष्यः। दुर्दैवतो दुःखमुपैति पश्चा–द्यतोऽत्रलोके सुलभं हि दुःखम् ॥
नष्टे जने शोचति बन्धुवर्गः गते धने स्यात्कृपणो यथैव। तस्मात्पुरस्तादनुशोचनीयं, पुनर्न तत्संसहतेऽभिमानः ॥
प्रेम्णाऽवसाव पूर्वन्तु सहैव दुष्टमृत्युना। ग्रासीकृतौ ततोऽस्माकं वियोगोऽजनि दैवतः ॥ १६७२ ॥
एतैश्चित्रैश्च भूयोऽस्मत्संयोगोऽजायत प्रियः। पलाय्य नावमारुह्य तीर्त्वा वेगवतीं नदीम् ॥ १६७३ ॥
स्तेनहस्तगतौ तेन मृत्युवक्त्रस्थितावपि। तद्गुहातश्च निष्कास्य चौरेणैकेन रक्षितौ ॥ १६७४ ॥
वनं भ्रान्त्वा ततः कश्चिद्–ग्रामो लब्धः सुदैवतः। कुल्माषहस्तिनाऽस्माकं योगोऽकस्मादजायत ॥ १६७५ ॥

यदि मनसि समीहा हातुमादातुमिष्टं, सुविहितयतनानां दैवमेकं सहायम्।

दुरधिगतिविकाले सम्भवो यस्य नास्ति, प्रभवति भवितव्यत्वेन तस्मिन्नकस्मात् ॥ १६७६ ॥
इति मत्स्वामिना प्रोक्तां वार्तां श्रुत्वा द्वयोःपुनः । पक्ष्ययोर्लोचनान्याशु मुञ्चन्तिस्माऽश्रुधोरणीम् ॥ १६७७ ॥
मत्पिताऽथाऽवदद्विद्वन् ! कथं नोक्तमिदं त्वया । यथा दुखं तव स्यान्नो पश्चात्तापोऽपि नो भवेत् ॥ १६७८ ॥
सहन्तेऽसह्यदुःखानि प्रकाशन्ते स्वयं तु न । समयं हि प्रतीक्षन्ते लोकोत्तरगुणालयाः ॥ १६७९ ॥
किञ्चिदप्युपकर्त्ता यस्तस्याऽपि सज्जनो हृदि । महोपकारं मनुते यावज्जीवमनुस्मरन् ॥ १६८० ॥
स्वयं प्रत्युपकारं नो कुरुते यावदुत्तमम् । अनृणं मन्यते नैव निजात्मानं नरोत्तमः ॥ १६८१ ॥
अपि द्विरुपकर्तुर्यो मन्यते नैव मूढधीः । सद्गुणं स मुधा जीवे-त्पशुतुल्यो निरर्थकः ॥ १६८२ ॥
उपकारभरं साधु-र्मनुते मेरुणा समम् । द्विगुणोपकृतिं कृत्वा तुष्यत्येव सुधीर्जनः ॥ १६८३ ॥

" मनसि वचसि काये पुण्यपीयूषपूर्णा स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः
परगुणपरमाणून्पर्वतीकृत्य नित्यं, निजहृदि' विकसन्तः सन्ति सन्तः कियन्तः" ॥ ॥ १६८४ ॥

भवान् जीवनदातास्ति ततोऽहमपि जीवनम् । ददामि चेत्सुखं मे स्या-दन्यथा तु कथं भवेत् ? ॥ १६८५ ॥
मत्पिता श्रेष्ठिनश्चान्ये, वचनैरेवमादिभिः । प्रीणयामासुरुत्साहा-दन्योऽन्यप्रेमबन्धनाः ॥ १६८६ ॥
अस्मदागमनेनैव गृहवासिजनाः समे । सन्तुष्टमानसा लब्ध-जीवना इव जज्ञिरे ॥ १६८७ ॥
अज्ञातमानवाश्चैवं नागरा अविश्वास्तथा । आवयोर्मेलनायैव सत्वरं समुपागताः ॥ १६८८ ॥

अशीर्वादप्रदाने च प्रशंसायां तथैव च । वर्द्धापननिमित्तश्च प्रदत्तं पारितोषकम् ॥ १६८९ ॥

प्रत्युपकृतयेऽस्माकं भृत्यायाऽनन्यचेतसे । कुल्माषहस्तिने निष्काः सहस्रं च समर्पिताः ॥ १६९० ॥

सम्भूय बन्धुवर्गोऽपि प्राभृतानि ददौ मुदा । अस्मभ्यं स्वर्णमाणिक्य–रत्नानि विविधानि च ॥ १६९१ ॥

अभिमतमिलनानां सुप्रतीक्ष्याऽऽगमानां, मिथ उदयति भावः कोप्यचिन्त्यो गरीयान् ।
ददति तदनुरूपं प्रीतिदानोपहारं, निरवधिकृतकृत्यास्तेन सर्वे भवन्ति ॥ १६९२ ॥

मत्पितुश्च कुलीनत्वाद्राज्ञा सार्द्धं तदैक्यतः । आवयोरागतिं श्रुत्वा मां देवी पुनराह्वयत् ॥ १६९३ ॥

दूती तत्पाणिपद्मेन लिखितं पत्रमुत्तमम् । मां नमस्कृत्य विनयात्प्रेम्णा मम करेऽददात् ॥ १६९४ ॥

विलोक्य पत्रं मुमुदे मानसं मम रागतः । उद्घाट्य वाचयामास सत्वरं स्निग्धचेतसा ॥ १६९५ ॥

स्वस्तिपूर्वकमुल्लाघपृच्छाऽनन्तरमादिशत् । आगन्तव्यं त्वया मातापितरावनुमोद्य च ॥ १६९६ ॥

अहं हि भवतीं द्रष्टुं सोत्सुका चिरकालतः । स्मृत्वा त्वं मम वात्सल्यं बाल्याद् न खलु विस्मर ॥ १७९७ ॥

इति श्रुत्वा पिता प्रेम्णा गन्तुं मां तत्र प्रैरयत् । लज्जानम्राहमेनं तमादेशं शिरसाऽदधाम् ॥ ९७९८ ॥

दासीभिः स्वकुलौचित्यविदुराभिः सहैकदा । नानाढौकनद्रव्याण्यादाय प्रासादमासदम् ॥ १७९९ ॥

दासीभिस्तानि वस्तूनि ढौकितानि प्रणम्य ताम् । महाराज्ञीं पुरो भूमौ वर्धाप्य विनयेन च ॥ १७९९ ॥

ह्रीहतोचितविज्ञाना साऽहं नम्रातिकन्धरा । सखीभिः प्राप्तकालाभिर्देव्यग्रेऽथ पुरस्कृता ॥ १७०० ॥

बद्धाञ्जलिपुटा नम्रनम्रा देवी पदाम्बुजे । अपतं तन्महाराज्ञी धृत्वा मां तु समाश्लिषत् ॥ १७०१ ॥
मूर्ध्नि मे स्वकरं न्यस्य मदाननविलोकनात् । उत्पन्नपरमाऽऽनन्दाऽमन्दं मन्दं तदाऽऽशिषत् ॥ १७०२ ॥
स्वं पादपीठं मे दत्त्वा स्थास्यतामिति चाऽवदत् । प्रणम्य पादपीठं तं रत्नभूमावुपाविशम् ॥ १७०३ ॥
राज्ञी वासवदत्ता सा श्रुत्वा मन्मुखतः कथाम् । मोहविजृम्भितं मेने येन चापद्रुतं जगत् ॥ १७०४ ॥
जिने ध्यानं गुरौ भक्तिः श्रद्धानं पुनरागमे । मोक्षाय परमोत्कण्ठा सर्वमेवमुपादिशत् ॥ १७०५ ॥
स्वीचक्रे नम्रया वाचा मस्तकेनानुमोद्य च । ऊचेऽहमम्ब ! नारीणां स्थैर्यं न धर्ममन्तरा ॥ १७०६ ॥
स्वानुभूत्या मयाज्ञातमवश्यं भावि मत्पतिः । तत्तदन्वेषणं पूर्वं पश्चात्सर्वं भविष्यति ॥ १७०७ ॥
न चेद्दीक्षा मया ग्राह्या यथास्माद् भवनिःसृतिः । अन्वेषिते च दृष्टीच्छा तस्यां च मिलनस्पृहा ॥ १७०८ ॥
तस्यां च विघ्नरहितैकान्तप्राप्तिस्पृहाभवत् । प्रबलान्मोहमाधुर्यात् सर्वमाचरितं मया ॥ १७०९ ॥
तत्फलं कटु सम्प्राप्तं किमन्यत्कथनेन मे । तत्प्रयत्नं करिष्यामि यथायोग्यं भविष्यति ॥ १७१० ॥
मत्पतिर्भवभीतः स सहायं च विधास्यति । त्वादृशां स्वजनानां च प्रसादेन शुभं मम ॥ १७११ ॥
शुभाशिषां च किं न स्यात् श्रद्धालूनां विशेषतः । आवयोः कार्यविज्ञानात् प्रजापि तद्विधास्यति ॥ १७१२ ॥
अनुमत्या महाराज्ञी सोपहारं मणिस्रजम् । ददावादाय नत्वा च स्वगृहं समुपागमम् ॥ १७१३ ॥
मुहूर्ते च शुभेऽस्माकं कुटुम्बद्वयपोग्यया । समृद्ध्याऽपूर्वया लग्नो-त्सवो जातोऽतिशोभनः ॥ १७१४ ॥

कस्यापि आतुचिन्नैवा–भवदीदृङ् महोत्सवः । अविच्छिन्नो यतोऽनेन महानन्दो जनेऽजनि ॥ १७१५ ॥

आवयोर्बन्धवः सर्वे मित्रभावमुपागताः समसुखत्वं हि भेजिरेऽनन्यभावतः ॥ १७१६ ॥

मद्भर्ता सद्गृहस्थाना–मुचितं व्रतपञ्चकम् । जग्राह भवपाथोधि–तारणे सुतरण्डकम् ॥ १७१७ ॥

वीतरागगिरं नित्यं चिन्तयन्नमृतोपमम् । जीवनं यापयामास धर्मेणैव समाहितः ॥ १७१८ ॥

पूर्वोक्तेन प्रकारेण मयाऽप्याचाम्लकानि च । अष्टोत्तरशतं पूर्णी चक्रिरे विधिपूर्वकम् ॥ १७१९ ॥

यतोऽनेन तपश्चर्या–विधानेन समं भुवि । यथेप्सितप्रदं नान्यद्व्रतं श्रेष्ठं विलोक्यते ॥ १७२० ॥

" तपसा जायते सिद्धिः परमार्थविधायिनी । विना तेन जनिर्लोके, निन्दनीयतमा मता " ॥ १७२१ ॥

अथाहं सार्द्धमेतेन कर्तुमानन्दमन्वहम् । अतिष्ठं शुद्धचित्तेन विशुद्धतरमानसा ॥ १७२२ ॥

वृक्षवल्लीचयाकीर्णं नानापक्षिरवाकुलम् । वापीपद्मवनैर्व्याप्तमुद्यानमतिसुन्दरम् ॥ १७२३ ॥

तत्र सिद्धस्थपतिभीरचितं रम्यमुत्कटम् । आदिनाथजिनेन्द्रस्य मन्दिरं जितमन्दरम् ॥ १७२४ ॥

तस्मिन्सिंहासने श्रेष्ठमणिमाणिक्यमौक्तिकैः । कृता कलाविदा चित्तहारिणी प्रतिमाऽस्ति च ॥ १७२५ ॥

विविधसुगुणभावान् सर्वदोल्लासयन्ती, विषयकटुकषायान् सर्वथोन्मूलयन्ती ।
प्रशमरसममन्दस्यन्दनेन स्रवन्ती, जिनपरिवृढमूर्त्तिर्मंगलं मङ्गलानाम् ॥ १७२६ ॥

विकशितमुखपद्मा–दृष्टियुग्मप्रसन्ना–भवजलनिधिनौका मुक्तिसत्सार्थरूपा ।
जिनपतिमधुमुद्रामोदमानाऽसमाना–इह जिनमूर्त्तिर्जैनभावान् व्यनक्ति ॥ १७२७ ॥
कारुण्यैकनिकेतनाऽमृतदृशा विभ्राजमानाऽतुलं, तत्तद्योगवरप्रयोगरचितस्वादुस्थितिर्प्राञ्जला ।
मूकाऽपि प्रणिपातिनां हृदयिताशङ्काशमं कुर्वती, जैनेन्द्रीप्रतिमा गुणैरनुपमा सर्वोत्तमा राजते ॥ १७२८ ॥
त्रिकालं तत्र पूजायां दर्शने वन्दने तथा । समयं गमयामास मया साकं स सत्क्रियः ॥ १७२९ ॥
" पूजामाचरतां जगत्त्रयपतेः सङ्घार्चनां कुर्वतां, तीर्थानामभिवन्दनं विदधतां जैनं वचः शृण्वताम् ।
सद्दानं ददतां तपश्च चरतां सत्त्वानुकम्पाकृता, येषां यान्ति दिनानि जन्मसफलं तेषां सुपुण्यात्मनाम् " ॥ १७३० ॥
प्रभाते च सुवासेन मध्याह्ने कुसुमैस्तथा । सन्ध्यायां दीपधूपाभ्यां विधेयाऽर्चा विवेकिभिः ॥ १७३१ ॥
पूजया जिनदेवस्य स्तवनेन च लभ्यते । नरदेवभवं प्राप्य मोक्षस्थानं च निर्भयम् ॥ १७३२ ॥
चक्रभृद्भरतो लोके जिनेन्द्रपूजया यथा । भव्यभक्तिप्रभावेण प्रापद् वै शाश्वतं पदम् ॥ १७३३ ॥
नश्यति नैशिकं पापं प्रभाते जिनपूजया । आजन्माऽर्जितपापश्च मध्याह्नपूजयाऽर्हतः ॥ १७३४ ॥
सप्तजन्मकृतं पापं सायंकालिकपूजया । धूपदीपैर्जिनेन्द्रस्य नश्यत्येव न संशयः ॥ १७३५ ॥
अष्टप्रकारिकापूजा श्रावकेण निरन्तरम् । यथाशक्तिर्विधातव्या, भावपूजाऽपि भावतः ॥ १७३६ ॥

भावपूजाप्रकारो यथा—

" दयाम्भसा कृतस्नानः, सन्तोषशुभवस्त्रभृत् । विवेकतिलकै राजन् भावना पावनाऽऽशयः ॥ १७३७ ॥

भक्तिश्रद्धानकाश्मीरो–न्मिश्रपाटीरजद्रवैः । नवब्रह्माङ्गयुग्देवं शुद्धमात्मानमर्चय ॥ १७३८ ॥

क्षमापुष्पं स्रजं धर्म–युग्मं क्षौमद्वयं तथा । ध्यानाभरणसारञ्च तदंगे विनिवेशय ॥ १७३९ ॥

मदस्थानभिदा त्यागैर्लिखाग्रे चाष्टमङ्गलम् । ज्ञानाग्नौ शुद्धसंकल्पकाकतुण्डञ्च धूपय ॥ १७४० ॥

प्राग्धर्मलवणोत्तारं धर्मसन्न्यासवह्निना । कुर्वन्पूरय सामर्थ्य मन्य ! नीराजनाविधिम् ॥ १७४१ ॥

कुर्वन्मङ्गलदीपं च स्थापयाऽनुभवं पुरः । योगनृत्यपरस्तौर्य–त्रिकसंयमवान् भव ॥ १७४२ ॥

उल्लसन्मनसः सत्य–घण्टां वादयतस्तव । भावपूजारतस्येत्थं, करक्रोडे महोदयः ॥ १७४३ ॥

स्याद्भेदोपासनारूपा द्रव्यार्चागृहमेधिनाम् । अभेदोपासनारूपा साधूनां भावपूजना ॥ १७४४ ॥

वरवारा च सुचन्दनैः सुपुष्पैः शुभधूपेन च दीपदर्शनेन ।
शुचिचोक्षैश्च निवेदनीयभोगैः सुफलैरष्टविधाऽर्चना जिनस्य ॥ १७४५ ॥

" वरगन्धपुप्फ अक्खय पईवफलधूवनीरपत्तेहिं । नेविज्जविहाणेणय जिणपूआ अट्ठहा भणिया ॥ १७४६ ॥

---

१ मेघाऽऽघोषः मृदङ्गशंखश्चेति ' नृत्यगीतवाद्यमपि । त्रयमेकत्र संयमः ' धारणा–ध्यानं–समाधिश्चेति त्रयम् " ।

विहिणा उ कीरमाणा, सव्वा विअ फलवईभवे चेट्ठा । इहलोइयावि किं पुण पूआ उभयलोगहिआ " ॥ १७४७ ॥
सप्तदशाऽष्टैकविंश–त्यष्टोत्तरशताऽभिधाः । पूजाप्रकीर्त्तिता शास्त्रे शास्त्रविद्भिः शुभप्रदा ॥ १७४८ ॥
पूजनावसरे पञ्चकल्याणकानि भक्तितः । स्मरणीयानि दिव्यानि जिनेन्द्रस्य सुमेधसा ॥ १७४९ ॥
साक्षाज्जिनेश्वरं मत्वा प्रतिमापूजनं शुभम् । तरीतुं संसृतिं कार्यं शुद्धाऽऽलम्बनमेतकम् ॥ १७५० ॥
दर्शनादिविधानेन प्रतिमामार्जनादिना । श्रेयसा युज्यते श्राद्धः प्रदक्षिणक्रियादिभिः ॥ १७५१ ॥
सङ्गीतकस्य सामग्र्या मत्स्वामी वरभक्तिमान् । जिनेश्वरस्य सद्भक्त्या प्राकरोद् गुणकीर्त्तनम् ॥ १७५२ ॥
विद्याधरेन्द्रपौलस्त्यमन्दोदर्योस्तथैव च । वीतभये प्रभावत्यु–दायनधरणीशयोः ॥ १७५३ ॥
यथाकालोऽगमद्गीत–वाद्यनाट्येषु मे तथा । प्रियेण सह भक्तेन समयः क्षणवद्ययौ ॥ १७५४ ॥
दयादाक्षिण्ययुक्तस्य धर्मकार्यरतस्य च । संसारिकेषु कार्येषु स्वल्पश्च समयोऽगमत ॥ १७५५ ॥
नृत्यं नानाविधं तत्र चित्तैकाग्र्यसमीहया । कुर्वाणा सततं यत्नात्साफल्यं जन्मनो व्यधाम् । ॥ १७५६ ॥
जैनधर्मरतो नित्यं भावित्वा शुद्धभावनाम् । मेने सजीवनं स्वीयं सुधास्वादसमं खलु ॥ १७५७ ॥
क्वापि जिनेन्द्रवर्गस्य शुद्धचारित्रधारिणाम् । जीवनाऽद्भुतवृत्तान्तश्रवणे समयोऽत्यगात ॥ १७५८ ॥
" सोअव्वाइं नरामरसिवसुहजणयाइं अत्थसाराइं । सव्वन्नुभासिआइं भुवणम्मिपसिद्धिम–जसाइं " ॥ ॥ १७५९ ॥

सामायिकतपश्चर्या–पौषधैः पर्ववासरे । आवयोः समयः प्रायः सुखेन किल जग्मिवान्
एवं निवृत्तिमासाद्य सुप्रत्येतुं सखीमनः । एकान्तं प्राप्य सामोदंस्नेहेनाऽऽकारिता सखी ॥ १७६० ॥
मया सारसिका पृष्टा " गतायां त्वां विना मयि " । "गृहं गतायास्ते कीदृ–गवस्थाऽभूद्‌दाऽधुना " ॥ १७६१ ॥
अन्यच्च–"पत्या सार्द्धं यदहमगमं त्वां विना तत्र काले, । अन्तस्ते किं कथय समभूत् कोऽपि वर्को मदर्थम् ।
एतत्कृत्या कुपितमनसां मज्जनासज्जनानां, कां कां पीडां त्वमतिगमिता मां विना दीनदीना " ॥ १७६२ ॥
" अवोचत्सा त्वदुक्तेन वचनेन कृतत्वरा । आनेतुं भूषणान्याशु गृहद्वारमहं गता ॥ १७६३ ॥
द्वारमुद्घाटितं दृष्ट्वा व्याकुलीभूतचेतसः । विलोकिता मया गेहे भृशोद्विग्ना जनास्तदा ॥ १७६४ ॥
प्रासादे च मदीयोऽपि प्रवेशो दुष्करोऽभवत् । भयस्तब्धशरीराऽपि साशंकजनवीक्षिता ॥ १७६५ ॥
तथाऽप्यलङ्कृतीः सर्वा गृहीत्वा पुनरागता । तत्रं तु नौ मिलिता तेन ग्रन्थिं लात्वाऽगमं गृहम् " ॥ १७६६ ॥
"हा सखीति विनिःश्वस्य त्वदास्थानगृहं गता । भूरिदुःखहता मुष्ट्या वक्षःस्थलमताडयत् ॥ १७६७ ॥
पूर्वजन्मसमुद्भूतप्रेमतत्त्वाऽविवेकिभिः । एतैररसिकैः सार्द्धं, सत्या साऽरसिकाभवम् ॥ १७६८ ॥
विषादवह्निना तप्ता विस्रत्यश्रूणि नेत्रयोः । विलापं कुर्वती भूयः शून्यदृष्टिरहं स्थिता ॥ १७६९ ॥
अहं नाम्ना विहंगी त्वं विहंगी पूर्वजन्मनः । मनुष्ये च समानाऽस्मि सखित्वं योग्यमेव नौ ॥ १७७० ॥

शनैः शनैरहस्थाया मम शान्तिरजायत । " " हृदये मेऽभवत्तर्कस्तदा तत्समयोचितः " ॥ १७७१ ॥
" एतयोश्चरितं पूर्व-जन्मनः श्रेष्ठिने यदि । " कथयिष्यामि नो तर्हि सोऽतिक्रुद्धो भविष्यति " ॥ १७७२ ॥
तस्मादेवं करिष्येऽहं दयालुः स तयोर्भवेत् " । अहमप्यनृणीभावं किंचित् प्राप्स्यामि वस्तुतः ॥ १७७३ ॥
एवं विधा विचारा मेऽजायन्त व्यग्रमानसे । विषण्णमानसा सद्यः सुप्ताहं शयनीयके ॥ १७७४ ॥
तथापि तन्निशायां मे निद्राऽजायत वैरिणी । प्रभाते नगरश्रेष्ठि-पादयोरहमापतम् ॥ १७७५ ॥
ततः पूर्वभवस्यैतद्वृत्तान्तं कथितं मया । त्वदीयं सकलं तस्मै नगरश्रेष्ठिने क्रमात् ॥ १७७६ ॥
अत्युच्चकुलजातत्वाऽभिमानेन गतप्रभः । मदुक्तं स समाकर्ण्य राहुग्रस्तशशाङ्कवत् ॥ १७७७ ॥
हस्तौ संमर्दयन्नाह सहसा दुःखमागमत् । हाऽस्मदीयकुले लग्नं कलङ्कं किं करोम्यहम् ॥ १७७८ ॥
हा दैव ! दुर्दशेयं मे विहिता केन हेतुना । अपराधसहस्रेपि नेदृशी यातनोचिता ॥ १७७९ ॥
दोषो नास्त्येव तस्याऽयं श्रेष्ठिपुत्रस्य सर्वथा । स्वैरिण्या मत्तनूजाया एव दोषोऽस्ति निश्चितम् ॥ १७८० ॥
भ्रष्टनारी कुलीनाना-मपमार्गाऽनुसारिणी । यशः प्लावयते नित्य-मापगास्वतटाविव ॥ १७८१ ॥
कुशीला दुहिता निन्द्यं विधाय कर्मदारुणम् । घनाढ्यमुन्नतं वंशं प्रत्यहं क्षीणतां नयेत् ॥ १७८२ ॥
असदाचाररक्ता सा विशुद्धमपि सत्कुलम् । कलङ्कयति सर्वं हि हिमबिन्दुरिवाऽब्जिनीम् ॥ १७८३ ॥
अतो दुश्चरिता नारी विभूषयति नो कुलम् । अरक्षिता करोत्येव तस्यैवाऽधः स्थितिं क्षणात् ॥ १७८४ ॥

उक्तं च–" शास्त्रं सुनिश्चितधिया परिचिन्तनीय–माराधितोऽपि नृपतिः परिशङ्कनीयः
आत्मीकृताऽपि युवतिः परिरक्षणीयाः. शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् " ॥ १७८५ ॥
सत्यमेतद्यथा स्वप्नं मृगवारि च कल्पितम् । तथैव चञ्चला नारी नो विश्वास्या कदाचन ॥ १७८६ ॥
पुनर्जगाद मामेवं त्वया सारसिके ! पुरा । कथं नोक्तं इदं येन नाऽभविष्यदनर्थता ॥ १७८७ ॥
तदानीमेव तेनैव परिणाय्य सहांगजाम् । एतत्कष्टदशाभाजो नाऽभविष्याम सर्वथा ॥ १७८८ ॥
मयोक्तं नगरश्रेष्ठिन् ! " यावत्तस्या मनोरथः । सफलो न भवेत्तावन्न प्रकाश्यमिदं मया " ॥ १७८९ ॥
" इत्थं तज्जीवितव्यस्य शपथं कृतवत्यहम् " " तत्कार्यसाधने चाऽपि व्यापृताऽऽसं सखीधिया " ॥ १७९० ॥
" अतएव मया मौनं बलादप्युररीकृतम् । तस्मान्मयि क्षमा कार्या कृपया श्रेष्ठिपुङ्गव ! " ॥ १७९१ ॥
श्रेष्ठिन्येयं श्रुता वार्ता तदा त्वद्दुःखदुःखिता । सा त्वद् वियोगतश्चैव विमूढा न्यपतद् भुवि ॥ १७९२ ॥
गरुडग्रस्त भार्या हि भुजङ्ग इव वीक्ष्यताम् । श्रेष्ठीशोऽप्यञ्जसा मुक्तकण्ठं लग्नः प्ररोदितुम् ॥ १७९३ ॥
श्रेष्ठिनी चेतनां प्राप्य हृदयोद्भेदकारकम् । आरेभे रोदनं भूरि येन सर्वेऽरुदंस्तदा ॥ १७९४ ॥
सखि ! त्वद्गमनाद्बन्धु–तत्पत्नीतरमानवाः । रुदन्ति स्म भृशं वक्षस्ताडनं चक्रिरे मुहुः ॥ १७९५ ॥

भवति सरलबाला प्रायशो गेहरत्नं, गतवति किल तस्मिन् जायते शून्यगेहः । ॥ १७९६ ॥
हृदुदितखरशोकव्याप्तचक्षुर्मुखास्ते, स्वजनपरिजना यन् मुक्तकण्ठं रुदन्ति

श्रेष्ठिन्या हृदयार्द्रत्वात्पुत्र्याश्च प्रेमबन्धनात् । रोदनस्य च दुःखस्य मर्यादा नाऽभवत्सखि ! ॥ १७९७ ॥
पुनस्त्वदीयतातं सा विनयेन समन्विता । प्रार्थयन्ती जगादेति प्रेम्णा मधुरया गिरा ॥ १७९८ ॥
शुद्धाचारस्य मान्यस्य देहिनोऽपि ध्रुवं सदा । वियोगो वा कलंको वा, पुत्र्या दुःखद्वयं भवेत् ॥ १८९९ ॥

पुत्रीकुलद्वयसुसन्धिकरी प्रसिद्धा, भाग्याद्द्वयोः सुखमथोऽसुखमन्यथा स्यात् ।
पुत्रीमतां तु विरहः सुसहः सुखाय, लोकापवाद इति सत्यविदा निरूप्य ॥ १८०० ॥
एतत्सर्वं पुरोपात्तकर्मणा जायते खलु । दैवाधीनमिदं सर्वं जगद्विपरिवर्तते ॥ १८०१ ॥
जगदिदमपि सर्वं चाल्यतेऽचिन्त्यशक्त्या, प्रसभमिह पराभूतिं गता ज्ञानिनोऽपि ।
कृतिकुशलतया हीह प्रजीवन्ति जीवाः, फलवितरणकार्येऽचिन्त्यशक्तिः समर्था ॥ १८०२ ॥
इच्छयाऽनिच्छया वापि प्रारब्धवशगो नरः । सुखं दुःखं च भुंक्ते हि करण्डस्थ इवोरगः ॥ १८०३ ॥
इह जगतिसमग्रे नास्ति कश्चित्स्वतन्त्रः, अनधिगतगतिर्यत्रास्ति कश्चिन्नियन्ता ।
गुण इति गुरुदोषो वा न कस्मै च देयो, निजहृदयसमत्वेनाऽऽशु शान्तिर्विधेयाः ॥ १८०४ ॥
तस्मादकार्यकर्त्र्यास्तु तस्या दोषं न चिन्तय । यतस्तामनयद्दैवं कुटिलं कुपथं बलात् ॥ १८०५ ॥
वार्तायाः स्मरणेनैव निश्चितं पूर्वजन्मनः । संचितस्याऽतिरूढस्य फलं लब्धं हि कर्मणः ॥ १८०६ ॥
दैवप्रेरितया सुक्त-दुःखायाश्चापराधिता । अल्पीयसी हि मन्तव्या नाऽत्र क्रोधस्य कारणम् ॥ १८०७ ॥

तस्यान्तु मे तथा भावो हृद्येषा च तथा स्थिता । तया विना यथा नास्मि क्षमा जीवितधारणे ॥ १८०८ ॥

निजनियतिनियोगात्सर्व एवाऽत्र जीवाः, अशुभशुभदशायां वर्तमाना न शोच्याः ॥

इयमपि मम पुत्री पूर्वजन्मस्मृतेश्च, स्वपतिमनुस्मरन्ती न त्वया शोचनीया ( दूषणीया ) ॥ १८०९ ॥

यदपि सममपत्यं पुत्रपुत्री द्वयं स्यात्, तदपि भवति मातुः कन्यकायां हि रागः ।

इयमपि मम पुत्री जीवनस्याऽस्ति हेतुः, प्रभवतु भवदादिर्नैव जीवाम्यहं तु ॥ १८१० ॥

इत्थं सा श्रेष्ठिनी प्रोच्याऽनुनयार्थं पतिं निजम् । प्रणम्य साञ्जलिस्तस्मै स्वाभिप्रायं न्यवेदयत् ॥ १८११ ॥

" ओमित्युक्तं ततस्तेनाऽनिच्छताऽपि तदाग्रहात् । अवोचच्च प्रिये ! धैर्यं धेहि पुत्र्यै " यतेऽधुना " ॥ १८१२ ॥

इमौ द्वौ क्व गतौ तत्तु ज्ञास्यते श्रेष्ठिनोऽन्तिकात् " । इत्युक्त्वा त्वत्पिता शीघ्रं समारुह्य गतो रथम् ॥ १८१३ ॥

युवा गेहं समानेयौ केनोपायेन सत्वरम् । इत्थं व्यचिन्तयत्साकं श्रेष्ठिना स्वहिताय वै " ॥ १८१४ ॥

" त्वत्तातबन्धुवर्गैस्तु दुराचारपरायणैः । असत्प्रलापिभिर्बाढं भर्त्सिताऽहं शुभाशया ॥ १८१५ ॥

विरूपे चक्षुषीकृत्वा चैकेन केनचिद्भृशम् । पादेन ताडिताह्येवं दत्तो दण्डोऽविचारतः ॥ १८१६ ॥

दं[illegible]मिभा च केशेषु कृष्टा संजातवेपथुः । असह्या मूर्च्छनामाप्ता रतायिव न सा पुनः ॥ १८१७ ॥

वालैर्दष्टा सखीभिश्च भिन्ना कृष्टा युवव्रजैः । अयि ! किं वच्मि तत्काले केन नाहं तिरस्कृता ? ॥ १८१८ ॥

पुनस्ते कथयामासुर्दुष्टे ! नीता कथं त्वया । तत्र सा कपटं कृत्वा ब्रूहि विश्वासघातिनि ! ॥ १८१९ ॥

युष्मदन्वेषणायाऽपि प्रहिता बहवो जनाः । समागतौ युवां ज्ञात्वा पुनरत्र समागताः ” ॥ १८२० ॥
मत्सख्या यच्च विज्ञातं तत्सर्वं कथितं मया । तत्रत्यं विशदोदन्तं मामकीनं स विस्तरम् ॥ १८२१ ॥
मत्स्वामी सत्वरं कस्माद् विश्वस्तां त्वां विनाऽकरोत् । प्रयाणमिति वृत्तान्तं तस्यै विज्ञापितं मया ॥ १८२२ ॥
विश्वासार्हो भवति विरलस्तत्र नारी विशेषाद्, दूरक्ष्याऽस्ति प्रकृति चपला स्वीयनारी किमन्या ? ।
नानादुःखे, च परविषये रक्षणीयं रहस्यं, तत्त्वं ज्ञात्वा क्वचिदपि जने कोऽस्तु विश्वासवासः ॥ १८२३ ॥
भर्त्राऽथ विदुषां स्वीय-मित्राणां सुसहायतः । नाटकं रचितं हृद्यं विबुधानन्ददायकम् ॥ १८२४ ॥
नाट्यश्चाभिनयेयुस्तन्मण्डपेऽतिमनोहरे । अचिरेण व्यवस्थेति विहिता श्वसुरेण मे ॥ १८२५ ॥
दृश्यश्राव्यविभेदतः कविजनाः काव्यं द्विधा मन्वते, श्राव्याद् दृश्यमतिप्रतीतिदतया साक्षात्कृतावृत्तमम् ।
उद्यद्भावनटीनटाद्भुतकलाकान्तेष्टनाट्योद्भटं, तालोत्तालरसालगीतमिलितं शान्तिप्रदं नाटकम् ॥ १८२६ ॥
सद्बोधं च चरित्रचित्रणवशादुद्दामकाव्यं कवेः, नानातालनिबद्धवाद्यमधुरध्वानोत्थसंगीतकम् ।
नानानृत्यकलां तथा जवनिकायां भावचित्रे क्षणं, तत्तत्सर्वमभाटकं वितरति प्रेक्षावते नाटकम् ॥ १८२७ ॥
एवं सदामनोहारि-प्रासादे मित्रमण्डलैः । सम्बन्धिभिश्च चक्राङ्का-विव पद्मसरःस्थितौ ॥ १८२८ ॥
मिथः प्रेमरसास्वाद-तृप्तिमाबिभ्रतौ स्थितौ । प्रमोदमग्नचेतस्कौ दिनान्यपनयाव वै ॥ १८२९ ॥
आवयोर्मानसं प्रेम मोदाभ्यामेकतामगात् । क्षणमात्रं वियोगं नो सोढुं शक्तौ परस्परम् ॥ १८३० ॥

चिरं स्नेहसुखं भोक्तुमहमेवाऽभवं किल । क्षणोऽप्यभूत्सुदीर्घो मे वियुक्ताया विषादतः ॥ १८३१ ॥
मज्जने भोजने भूषाधारणे शयने तथा । अन्यकार्येऽप्यभिन्नत्वं धारयन्तौ प्रमोदिनौ ॥ १८३२ ॥
धृत्वा मालाः सरोजानां सुगन्धिजलवासितौ । तथा सुरभितैलेन मर्दितांगौ च नाटकम् ॥ १८३३ ॥
मुहुर्निरीक्षितुं यान्तौ सदानन्दमलौकिकम् । अन्वभूव सुनिश्चिन्तौ स्नेहेनाऽभिन्नता जुषौ ॥ १८३४ ॥
अन्योऽन्यादृतचाटुताकृतनिजत्वान्यत्वविस्मारकं, जातं विस्मयवाहकं तदमलं प्रेमातिलोकोत्तरम् ।
उत्थानं जिनदर्शनं गुरुनतिः स्नानं जिनाऽर्चाश्रुतिः, शुद्धाहारविहारसान्ध्यविधयः सार्द्धं बभूवुः स्वयम् ॥ १८३५ ॥
सत्वज्ञानविलोपकं प्रवहतो प्रेमप्रवाहे सतोः, अन्योऽन्यप्रतिरक्तयो स्तदुभयावस्थानमत्यद्भुतम् ।
अन्योऽन्यार्थसमर्थसाधनजुषोरेकात्मनोः प्रेमिणोः, सर्वं कार्यमभिन्नमेव भवति प्रीतिप्रतिष्ठापकम् ॥ १८३६ ॥
सार्द्धं स्वागतचाटुकारनमनाऽऽश्लेषादिकं तन्वतो–रैकात्म्यप्रतिरोधविस्मृतिजुषोरेकान्तरागाक्तयोः ।
किंचिन्नैव रहस्यमस्ति तु वपुस्तादात्म्यसंरोधकम्, दृष्ट्वा येऽनुभवन्ति तत्समरसं तेऽप्यत्र लोकोत्तराः ॥ १८३७ ॥
विनोदैः काव्यानां क्वचिदपि तथाऽन्योक्तिकथया, प्रहेल्या नर्मोक्त्या क्वचिदुपमया धीरललितैः ।
प्रकारैः पात्राणां क्वचिदपि च साहित्यसुधिया,–समेवं व्यासङ्गे झटिति सुखिनो यान्ति दिवसाः ॥ १८३८ ॥
" न रामश्चारित्रं त्यजति न गुणः सागरवरः, द्वयोर्नैपुण्यं न श्लथयति मनः पुण्यजन ! किम् ।
कदा दोषोत्थाने प्रभवति जनो यन्न सहसे, हृता वैदेही नो तव पुरि चिरं स्थास्यति सखे ! " ॥ १८३९ ॥

सदाऽऽनन्दस्मृत्या गुणकथनतः श्रीभगवतः, तथाऽऽत्मध्यानेन द्विविधनवधातत्त्वासननैः ।
स्वतत्त्वश्रद्धानै परमपदचर्चाभिरनिशं, विचारैर्व्याकृत्या मम सुखमया यान्ति दिवसाः ॥ १८४० ॥

एवं परस्परप्रेमभावनावर्तमानयोः, नक्तं दिनमगच्छन्नौ दुःखस्याऽवसरः कुतः ? ॥ १८४१ ॥

वर्षेवर्षे स्वमनुभवितुं जीवनस्य प्रसंगे, आगच्छन्ति क्रमशः ऋतवो भिन्नभिन्नप्रकाराः ॥ १८४२ ॥

काले काले सरसि विपिने भूमिभागेऽनुभूताः । तेभ्यस्तेभ्यो मनसि मम वै जागृताः केऽपि भावाः ॥ १८४३ ॥

ऋतुवर्णनम्

ग्रीष्म–तनुःस्वेदिनी मेदिनी रेणुरूक्षा जलं दुर्लभं तत्र शैत्यं विशेषात्
दिनं चातिदीर्घं रविस्तीव्रतापः सदा श्रूयते वारि वारि प्रलापः ॥ १८४४ ॥

नदीनिर्जला निर्दला वृक्षवाटी, धराधूसरा कामिनी सूक्ष्मशाटी ।
नगादावदग्धास्तदोद्घाटिता वै प्रचण्डांशुना छिद्र एवं समेषाम् ॥ १८४५ ॥

रम्या निशा तत्र शशी सुरम्यः तत्राऽतिरम्यः सकलः शशाङ्कः ।
वार्यन्त्रनिक्षिप्तसुखाम्बुधारा सा चन्द्रिकाऽभूद् विहितोपकारा ॥ १८४६ ॥

उसीरकर्पूरहिमाम्बुघृष्टः पाटीरपङ्कः प्रियया विसृष्टः। लिप्तं शरीरं तेन विलेपनेन, पुनर्धुतोऽसौ व्यजनाऽनिलेन ॥ १८४७ ॥

इतस्ततो दृश्यमाना प्रायो मरुमरिचिका । आश्रिता क्षुद्रवृक्षस्य छायापि पशुभिस्तदा ॥ १८४८ ॥

प्रावृट्

नभसि नवघनानां गर्जना जातमोदा, दिशिदिशि शिखिमालाः कुर्वते कान्तकेकाः ।

कृषिकुशल उदीच्याऽऽकाशगां मेघमालां, दृशिदृशि विकसन्सन्हर्षमाविष्करोति ॥ १८५१ ॥
पथि पथि मलिनानां दृश्यतेऽपां प्रवाहः, कृतगगनविगाहः: शोभते वारिवाहः ।

क्वचिदुदिततरोऽभूत् प्रावृषः सुप्रसादः, दिशि दिशि समुदीर्णो मूकमंडूकनादः ॥ १८५२ ॥
रसालाः फलैर्नम्रनम्रा विभान्ति, क्वचित्कोष्णता नाशिता लोकशान्तिः ।

क्वचिद्वल्लभा दर्शयन्ती च मेघं, नतेऽग्रोऽस्ति पत्युर्वचः संशृणोति ॥ १८५३ ॥
क्वचिच्चातकप्रार्थना दीनदीना, क्वचिच्चञ्चला मेघमाला विलीना ।

क्वचित्सन्ति भेका बिले पीनपीना, प्रवीणारहो ! भुञ्जतेऽङ्के नवीना ॥ १८५४ ॥
अमा यामिनी कालकादम्बरीभिः वृतानिः सुतानां मनोमोहयन्ती ।

जनान् शून्यवादे तदाऽस्थापयिष्यद् यदा चञ्चला तत्क्षणे नाप्युदैष्यत् ॥ १८५५ ॥
" शरद् " सप्तच्छदोत्थमधुमादकगन्धमत्ताः, धावन्त्यरयकरिणः परितोऽन्यचित्ताः ।

निष्पंकिला च धरणी सुतराञ्च नद्यः, साधु व्रजश्चरणचारविहारमाप ॥ १८५६ ॥
" शिशिर " प्रियो नलोऽभूदनिलोऽप्रियश्च दुष्कारकोऽभूत् शुचिसरित्क्रियश्च ।

प्रियाप्रियाणां शिशिरर्तुकाले विचारणाका जगदन्तराले ॥ १८५७ ॥

हेमन्त " शालिपालिका इक्षुमूलगा, कीरमण्डली रोधने रता ।
शाकवल्लरी प्राक् फला पुनः पुष्पितेति १ शमिनां निदर्शनम् ॥ १८५८ ॥
" वसन्तः " सरसि कमलमाला पादपा वाटिकायां, उपवनवरवल्ल्यो पुष्पिता आ दिगन्तम् ।
हसति जगदिदानीं सूचयन्वै वसन्तः, सुरभिशिशिरमन्दस्पन्दि वायुं धुनानः ॥ १८५९ ॥
क्वचिदपि सहकारे मञ्जरी सौरभाढ्या, झटिति पतति तस्यां गन्धलुब्धाऽलिमाला ।
रचयति मृदुरावं गुञ्जनं यद्वनान्ते, तदिह किल वसन्तः स्वागतं स्वीकरोति ॥ १८६० ॥
एवं सुखाब्धौ प्लवतोरावयोश्चन्द्रतारकैः । दीप्यन्निशीथिनी रम्या व्यतीयाय शरत्सुखात् ॥ १८६१ ॥
सुदीर्घरात्रिकश्चाथ शिशिरः समुपागमत् । हिमं तदाऽपतद्भूरि क्षीणरश्मिरभूद्रविः ॥ १८६२ ॥
चन्द्रचन्दनसन्मुक्ता रम्याणि कङ्कणानि च । कार्पासाम्बरकौशेया-ण्यप्रियाण्यभवन्हृदि ॥ १८६३ ॥
स हिमे शीतकाले तु तदाऽऽनन्दसमन्विताः । आगताः प्रतिहर्म्यं च नन्दन्तिस्म प्रवासिनः ॥ १८६४ ॥
वसन्तेऽत्र समायाते शीतं निर्मूलतां गतम् । सहकार-प्रफुल्लोऽभूत् स्नेहराजश्च विस्तृतम् ॥ १८६५ ॥

१ मुक्तात्मानां एषो दृष्टान्तः (वल्लरी) द्विधौ मुक्तात्मानौ जीवन्नपि मुक्तिसुखभाग्, अन्यश्चमृतेर्मुक्तिसुखभाग् स तु प्रसिद्धः । जीवन्नपि मुक्तिसुखभाग् यस्तस्य अयं दृष्टान्तः अत्र कार्यानन्तरं कारणं, कारणानन्तरं कार्यं तु प्रसिद्धमेव " ॥

नार्यः कार्याणि संतज्य दोलाऽऽरोहणमाचरन् । दृढबन्धाऽऽयतो दोला प्रेयसः प्रेमपाणिना ॥ १८६६ ॥

आन्दोल्यते तदा भूरि–रन्यविस्मृतिकारकः । मनसेऽस्खलिताऽऽनन्दः संप्रजायेत दुर्लभः ॥ १८६७ ॥

अतुलाऽद्भुतदृश्यस्याऽस्मद्युद्यानस्य संपदम् । दृष्ट्वा मोदं समापन्नौ नन्दनस्य सुराविव ॥ १८६८ ॥

मद्भर्तामामुवाचेदं मदनोद्यानवर्तिनः । दूतानिव द्विरेफाँस्त्वमिमान्प्रेक्षस्व वल्लभे ! ॥ १८६९ ॥

वृक्षपुष्पेषु चान्यस्मिन्स्थिता वनतराविमे । भान्ति नारीक्षणप्रान्ते संलग्नमिव कज्जलम् ॥ १८७० ॥

लतासु कुड्मलाकारं चन्द्रमाच्छादयन्निशि । राहुरिव द्विरेफालि–र्दृश्यते श्यामिकायुता ॥ १८७१ ॥

भृङ्गारभरितैर्वाक्यैरीदृशैर्मम वल्लभः । प्रीणयामास मां केशाञ्जग्रन्थे च सुमोच्चयैः ॥ १८७२ ॥

ततस्तेषां समस्तानां कुसुमानां मनोहरः । मिश्रगन्धो दिगन्तेषु प्रससार समन्ततः ॥ १८७३ ॥

तैश्चान्यैश्च प्रकारैर्हि विकस्वरवनस्पतेः । निरीक्षणे महानन्दो बभूवऽस्माकमन्वहम् ॥ १८७४ ॥

स्नेहग्रन्थिरभूदेव–मावयोर्दृढबन्धना । मिथोऽनुरक्तयोः कामं लब्धकांक्षितसम्पदोः ॥ १८७५ ॥

स्नेहस्य या ग्रन्थिरुदेति चित्ते तल्लौकिकं सौख्यमथोविधातुम् । आयाति कालर्तुरिति प्रमाणं फलं च भुंक्ते मिथुनं तदैक्ये ॥

वसन्तेऽथ पुनः प्राप्ते तत्स्वभाविकसम्पदम् । मुदा विलोकितुं यातावुद्यानभुवमादरात् ॥ १८७७ ॥

तत्राऽशोकतरोर्नीचैः शिलायां संस्थितो मुनिः । जिनेन्द्रध्यानसंलग्नो दृष्टो निम्नमुखाम्बुजः ॥ १८७८ ॥

एवं परोक्षस्य च पञ्चभेदास्तर्कोऽनुमानाऽऽगमप्रत्यभिज्ञाः । स्मृतिश्च भेदात्कथयामि तेषु पूर्वं च तर्कं प्रमितिप्रसङ्गात् १९०३
व्याप्यस्य सत्ता यदि, तर्हि साध्यं ध्रुवं भवेत्तत्र विचार एषः । तर्कस्त्वभावे विपरीतयोगात्तर्कोऽप्रमाणं पुनरेक आहुः ॥
ज्ञानं च पञ्चावयवप्रदिष्टं शास्त्रेऽनुमानं कृतिनो वदन्ति । पूर्वं प्रतिज्ञा पुनरस्ति हेतुश्चोदाहृतिश्चापनयश्च सिद्धिः ॥१९०५॥

सिद्धिं त्विमां निगमनं कथयन्ति वृद्धास्तस्मात्तथेति कथिताऽऽकृतिरस्य विज्ञैः ।
एभिःप्रमातृपुरुषस्य च योऽस्ति बोधः, सैवानुमानमिति जैनजना वदन्ति ॥ १९०६ ॥
स्वार्थं परार्थमिति यस्य च भेदमाहुः, स्वस्मै दृढाभ्यसितहेतुजसाध्यसिद्धिः ।
तत्स्वार्थमुक्तमितरत्परहेतवे यत् स्यात्पञ्चभिस्त्ववयवैश्च परार्थमस्ति ॥ १९०७ ॥

व्युत्पत्तिशैथिल्यसमीद्धतास्यामुदेति सङ्ख्यावयवान्तराणाम् । द्वयं क्वचित्, पञ्च च कुत्रचित्स्यु-र्दश क्वचित्तेऽवयवा भवन्ति १९०८
पदार्थवेत्ता परमार्थरीत्या, यथैव जानाति तथा प्रवक्ति । स आप्त इष्टो जिनराजशास्त्रे, भेदश्चलोकोत्तरलौकिकाख्याम् १९०९

ते लौकिका ये जनकाद्यभिख्याः अलौकिकाऽऽप्ताः प्रभुतीर्थकृद्भिः ।
श्रीतीर्थकृद्-भाषित आगमोऽस्ति, लोकाऽऽप्तवक्तस्तु तथोपचारात् ॥ १९१० ॥

तदाऽऽगमस्य प्रतिपाद्यवस्तु स्यात्सप्तभङ्ग्या परमार्थरूपम् । स्याद्वादसिद्धिः किल सप्तभङ्ग्या, तत्सप्तभङ्गीं प्रथमं वदामि ॥१९११॥
सद् वस्त्वसद् वस्तु तथोभयं चाऽवक्तव्यमेवं सदवाच्यमेवम् असत्तथाऽवाच्यमथोभयं स्यात् । स्यात् छन्दयोगेन च सप्तभङ्गी ॥१९१२

क्वचित्तृतीयोऽस्ति कृतश्चतुर्थो ग्रन्थान्तरे दर्शनतो मयोक्तम् । तत्र त्रयोर्थं सकलं वदन्ति परे च भङ्गा विकलं वदन्ति ॥ १९१३ ॥
सप्तैव यस्माद् वचनप्रकाराः, भङ्गाश्च सप्तैव ततो भवन्ति । संपूर्णरूपं किल सप्तभङ्ग्यास्तत्त्वावगन्तार उदाहरन्ति ॥ १९१४ ॥
जानन्ति तत्त्वैकनिविष्टचित्तास्तस्याः स्वरूपं जगतो यथार्थम् । तत्पादपद्मद्वयसेवया च धन्या विदन्ति स्म हि सप्तभङ्गीम् ।१९१५।
जगद्वृत्तिपदार्थानां विज्ञाय भवन्ति हि । चत्वार्यत्र प्रमाणानि शास्त्रोक्तानि महाशय ! ॥ १९१६ ॥
प्रत्यक्षं प्रथमं प्रोक्तमनुमानं द्वितीयकम् । तृतीयमुपमानं च चतुर्थमागमाभिधम् ॥ १९१७ ॥
प्रत्यक्षमिन्द्रियं ज्ञेयमनुमानं तु व्याप्तिधीः । सादृश्यधीश्चोपमानं पदानां ज्ञानमागमः ॥ १९१८ ॥
प्रत्यक्षमनुमा चैवोपमितिः शब्दजा तथा । प्रमाश्चैताःस्मृता विज्ञैस्तैश्चतुर्भिश्चतुर्विधाः ॥ १९१९ ॥
इन्द्रियैर्जायमाना धीस्तत्प्रत्यक्षं प्रचक्षते । साध्यहेतोः सह स्थित्या व्याप्येन व्यापकस्य धीः ॥ १९२० ॥
अनुमितिर्भवेत्सैव ज्ञातेनाऽज्ञातवस्तुनः । ज्ञानं यत्स्यात्तु विज्ञेयोपमितिः सर्वथा बुधैः ॥ १९२१ ॥
शास्त्राद्गुरूपदेशाच्च वस्तुज्ञानं यदाप्यते । शब्दजा सा प्रबोद्धव्या प्रमा सर्वज्ञकीर्त्तिता ॥ १९२२ ॥
चतुर्विधप्रमाणेन स्वरूपं बन्धमोक्षयोः । सम्यग्विज्ञायते प्राज्ञैर्यज्ज्ञात्वा मुच्यते भवात् ॥ १९२३ ॥
आत्माऽयं किं स्वरूपोऽस्ति ? ज्ञातव्यं तद्विशेषतः । मुक्तः प्रकीर्त्तितो नित्यं गन्धादिगुणपञ्चकात् ॥ १९२४ ॥

१ अनुमितिरित्यर्थः ।

तैललिप्ते यथा मूर्ध्नि धूलिरासज्जति क्षणात् । रागद्वेषोपलिप्ताङ्गं तथा कर्माणि देहिनाम् ॥ १५५० ॥
तत्प्रभावादतिसूक्ष्म–पृथ्व्यादिजीवयोनिषु । जन्ममृत्युवशं यातोऽसकृद्भ्राम्यति देह्ययम् ॥ १९५१ ॥
सामान्यतस्तु कर्माणि बन्धनायाऽऽत्मनः सदा । अष्टैव सन्ति लोकेऽस्मिन्निति सर्वज्ञभाषितम् ।
ज्ञानावरणमाद्यं स्याद्दर्शनावरणं तथा । तृतीयं वेदनीयं च मोहनीयं चतुर्थकम् ॥ १९५२ ॥
आयुश्च पञ्चमं प्रोक्तं षष्ठं नामेति कीर्त्तितम् । सप्तमं गोत्रमित्याहुरन्तरायं तथाऽष्टमम् ॥ १९५३ ॥
उप्तानि बीजानि यथा पृथिव्यां, फलानि पुष्पाणि पृथग्विधानि । वितन्वते तानि निजस्वभावात्तथैव कर्माणि शुभाऽशुभानि ॥
कर्मजन्यफलस्यात्र स्वरूपं ज्ञायते स्फुटम् । द्रव्यं क्षेत्रं भवंभावं कालं चाश्रित्य निश्चयात् ॥ १९५५ ॥
द्रव्यमात्मोच्यते चात्र क्षेत्रं च भुवनत्रयम् । फलानुसारतः कालोजन्मान्तरगतिप्रदः ॥ १९५६ ॥
देहश्चात्माश्रयस्तस्य स्थितिं योग्यामपेक्षते । तं च मानसिकं कर्मतच्चान्तः करणं तथा ॥ १९५७ ॥
तद्रूपता तदा यच्च परिणामस्तदाश्रितः । बाह्याभ्यन्तरदुःखाना–मात्मनः स समाश्रयः ॥ १९५८ ॥
एतद्दुःखविनाशाय विषयेष्वनुसज्यते । तदानीं भावतस्तत्र बध्नाति पापमुत्कटम् ॥ १९५९ ॥
पाप्मना तेन चक्रेषु जन्मनो मरणस्य च । भ्राम्यन्देही नवीनं हि बध्नीयात्कर्मसन्ततिम् ॥ १९६० ॥
एवं जनः स्वकर्मानुसारेण नरकाध्वनि । पशुयोनौ च नाके च भ्राम्यति मानवेष्वपि ॥ १९६१ ॥

मानवं भवमासाद्य जीवः कर्मानुसारतः । चण्डालाऽन्त्यजभिल्लानां व्याघ्रबर्बरयोरपि ॥ १९६२ ॥
शकानां यवनानां चाऽऽरण्यकानां कुले तथा । शाकुनिकादिवंशे च जायते ह्यवशः सदा ॥ १९६३ ॥
मानवेऽपि भवे लब्धे निजकर्मानुसारतः । अनन्तसुखदुःखानि भुनक्ति मनुजो ध्रुवम् ॥ १९६४ ॥
शरीरस्य च बुद्धेश्च विकासेन जनोऽसुखम् । प्राप्नोति किङ्करीभूय स्वं वा स्वामित्वमागतः ॥ १९६५ ॥
संयोगं च वियोगं च सहते परवान्सदा । कुलीनस्याऽथवा हीन–कुलस्योत्पद्यते गृहे ॥ १९६६ ॥
आत्मनोऽभ्युदयायैव बलं चाऽऽधातुमिच्छया । यत्र तत्राऽऽशयाग्रस्तो नित्यं धावति मानवः ॥ १९६७ ॥
लाभं प्राप्नोति वा हानिं परोलाभस्त्वयं मतः । सर्वेष्टदो भवेन्मोक्षो मानवे नान्यजन्मनि ॥ १९६८ ॥
अज्ञानकण्टकैः पूर्णा भवाटव्यास्तु पद्धतिः । सा तु तीर्थङ्करैः सम्यग्ज्ञानेन शुद्धशीलतः ॥ १९६९ ॥
सुगमा विहिताऽऽमोक्षं सर्वलोकोपकारकैः । तत्र गत्वा पुनरावृत्तिर्जायते नैव देहिनाम् ॥ १९७० ॥
नैकजन्मान्तरप्राप्तां जीवो यः कर्मसन्ततिम् । पिनष्टि संयमेनैवोत्पद्यमानं रुणद्धि च ॥ १९७१ ॥
संक्षीणसर्वकर्माऽसौ प्रेत्यकर्मविवर्जितः । निर्लेपतां व्रजत्येव जायते शुद्धिमत्तरः ॥ १९७२ ॥
क्षणमात्राद्विशुद्धोऽसौ प्राप्नोति परमं पदम् । ध्वस्तजन्मान्तरक्लेशः शश्वच्छान्तिमियर्ति च ॥ १९७३ ॥
नाना योनिप्रदं कर्म विमुच्यात्मा विशुद्धिमान् । उपाधिरहितश्चैव प्रयात्यूर्ध्वगतिं शुभाम् ॥ १९७४ ॥

अतिशयदृढकर्मव्रातबीजप्रदाहात्–निरवधिसुखपात्रं सत्यमेकान्तशुद्धम् ।
विमलमचलमृद्धमुक्तिधामास्ति नित्यं जगदुपरिगमेतद्यान्ति सिद्धा हि जीवाः ॥ १९७५ ॥
देवानां स्थानतोऽप्यूर्ध्वं तच्छुद्धं धाम वर्तते । प्रभातवच्च तद्भाति स्वच्छशङ्खसुवर्णवत् ॥ १९७६ ॥
त्रैलोक्यस्योपरिस्थं तद्रत्नछत्रसमाकृति । भ्राजते शाश्वतं रम्यं सर्वलोकनमस्कृतम् ॥ १९७७ ॥
सिद्धक्षेत्रमिति प्राहुः केचित्तत्परमं पदम् । अपरे अनुत्तरस्थानं ब्रह्मलोकं च केचन ॥ १९७८ ॥
समस्त जगतो मूर्ध्नि भ्राजमानस्य तस्य वै । शिरोभागे विकर्माणः सिद्धास्तिष्ठन्ति सर्वदा ॥ १९७९ ॥
सर्वकर्मविमुक्तास्ते रागद्वेषविवर्जिताः । विनष्टपुण्यपापाश्च सुखदुःखविनिर्गताः ॥ १९८० ॥
प्रभूतशक्तयश्चैते ह्यनन्तज्ञानशालिनः । कदापि नो पुनर्जन्म लभन्ते शाश्वतं श्रिताः ॥ १९८१ ॥
परात्मज्योतिषा तेनाऽन्यज्योतींषि मिलन्ति चेत् । तथापि तत्स्वरूपे नो सङ्कोचो विस्तारोऽपि च ॥ १९८२ ॥
"साध्वी सा श्रेष्ठिनी प्राह मुनेरित्युपदेशतः" । अद्भुतानन्दपाथोधौ न्यमज्जं शुद्धधीरहम् ॥ १९८३ ॥
हस्तौ संयोज्य भाले च मुनिवर्यमवादिषम् । उपदेशाऽमृतं पीत्वा कृतज्ञा भवतो वयम् ॥ १९८४ ॥
मद्भर्ता तु प्रणम्यैनं श्रद्धया परयाऽवदत् । जगतो बन्धनान्मुक्तो धन्योऽसि त्वं मुनीश्वर ! ॥ १९८५ ॥
यदि काचिन्न हानिः स्यात्तर्हि सिद्धिरियं कुतः ? । कृपया सर्वमाचक्ष्व भृशमुत्कण्ठिता वयम् ॥ १९८६ ॥

तीर्थकृद्धर्मपारीणो मुनिरानन्दितोऽवदत् । स्वकीयजीवनोदन्तं सुधामधुरया गिरा ॥ १९८७ ॥
शृणुष्व त्वं ममोदन्तं स्वस्थीभूय महाशय ! । महिषचित्रकव्यालैरारण्यकगजैः सदा ॥ १९८८ ॥
निषेवितं यथाक्रान्तमरण्यं महदद्भुतम् । तत्प्रदेशेऽभवद्ग्रामनगरं सुसुपायुतम् ॥ १९८९ ॥
तदीयप्रान्तभागे चाऽवसन् व्याधकुलानि वै । अरण्यचारिणस्ते च पशुहिंसां समाचरन्तः (?) ॥ १९९० ॥
तेषां स्थानमभूद् रौद्रं यमराजगृहोपमम् । कन्यायुवतयस्तत्र रक्तवस्त्राणि पर्यधुः ॥ १९९१ ॥
तदीयवनितावर्गो दन्तानां युवदन्तिनाम् । शस्त्राण्यतिविचित्राणि निर्ममावुद्यमात् सदा ॥ १९९२ ॥
तेष्वेकस्मिन् कुले पूर्वजन्मन्यासमहं पुनः । मूर्धन्यो व्याधजातीनां गजानां हनने रतः ॥ १९९३ ॥
वनस्थो मांसभोजी च पशूनां त्रासदायकः । व्यचरं मृगयाऽऽसक्तो निन्द्यकर्मपरायणः ॥ १९९४ ॥
सर्वे च मामकान् बाणान् पश्यन्तो लक्ष्यभेदिनः । प्रशंसंसुस्तराः सिद्धबाणसंज्ञां मम व्यधुः ॥ १९९५ ॥
मत्पिताऽप्यभवद् व्याधः स्वव्यापारोद्यतः सदा । तेन लोका वदन्ति स्म व्याधराजोऽस्त्ययं ध्रुवम् ॥ १९९६ ॥
मन्माता किल तातस्यातिप्रिया मानभाजनं । साऽप्यासीद् व्याधशूरस्य सुता प्रीतिविवर्द्धिनी ॥ १९९७ ॥
भूषयन्ती वनं सर्वं निजसौन्दर्यराशिना । ख्याताऽभूत् तेन सा तत्र वनसुन्दर्यभिख्यया ॥ १९९८ ॥
यूना मयैकदा लक्ष्यीकृतोऽभूत् कुञ्जरोत्तमः । शरेण मम तातस्तु हितायोपादिशत् तदा ॥ १९९९ ॥

आस्माकीनकुलाऽऽचारं शृणुष्व त्वं समाहितः । प्रजोत्पत्तिक्षमो हस्ती न हन्तव्यो न चाग्रणीः ॥ २००१ ॥

रक्षन्ती स्वशिशून् प्रेम्णा प्रयान्ती तत्समन्विता । व्याघभीतिमपि त्यक्त्वा सा रक्ष्या हस्तिनी सदा ॥ २०८२ ॥

स्तन्यजीवी च यो दन्तिडिम्भः स्यात् स तु सर्वदा । न हन्तव्यो यतः सैव क्रमेण सुमहान् भवेत् ॥ २००३ ॥

दम्पत्योर्मिथुनं स्नेहाद्विलोक्येतरेतरम् । न वियोज्यं यतस्तस्मात् संभोगात् सन्ततिर्भवेत् ॥ २००४ ॥

इत्थमस्मत्कुलाचारः पालनीयस्त्वयाऽङ्गज ! । तदुल्लङ्घयिता लोभात् सकुलो हि प्रणश्यति ॥ २००५ ॥

हस्तिडिम्भा न हन्तव्या रक्षितव्यं च तत्कुलम् । हृदि धार्यं हितं त्वेतद्बोधनीया निजाङ्गजाः ॥ २००६ ॥

श्रुत्वेति स्वकुलाचारं पालयन् गहने वने । विचरंश्च गजारण्यमहिपान् वृषभांस्तथा ॥ २००७ ॥

वराहान्मृगयूथादींस्त्रासयामासिवान् शरैः । भृशमानन्दितोऽभूवं स्वकीर्त्तिं चाथ वर्द्धयन् ॥ २००८ ॥

प्रशस्तकुलसम्भूतयुवत्या परिणायितः । पितृभ्यामेकया सार्द्धं सौन्दर्यराशिदीप्रया ॥ २००९ ॥

प्रीणयन्ती सदा प्रेम्णा स्निग्धश्यामवपुर्लता । नितम्बिनीनताङ्गी च कुचाभ्यां कामवर्द्धिनी ॥ २०१० ॥

विकसच्चन्द्रबिम्बास्या रक्तोत्पलविलोचना । यौवनेनोद्भटेनाऽपि प्रफुल्लाङ्गी व्यराजत ॥ २०११ ॥

सौन्दर्येणातिहृद्येन भूरिप्रीत्या च यौवने । महाभाग्यफलं जाता सा वामा वामलोचना ॥ २०१२ ॥

मनोहरमरण्यस्य रत्नं यस्याऽस्ति सन्निधौ । स्वर्भोगभागिहाऽजस्रमसंतुष्टः कथं भवेत् ? ॥ २०१३ ॥

संसेव्याऽऽनन्ददां रात्रौ प्रियालिङ्गनसन्ततिम् । समुत्थाय प्रभातेऽहं दूरीकृत्य श्रमं पुनः ॥ २०१४ ॥
मदीयकुलदेव्यास्तु मन्दिरमगमं ततः । प्रार्थनायै शुभं तुङ्गं श्रद्धयाऽचलयाऽनिशम् ॥ २०१५ ॥
अयि मयि करुणार्द्रां देवि ! दृष्टिं कुरु त्वं बलमतुलमपि त्वं देहि यात ! प्रसीद ।
कुलमपि मम सर्वं वर्धय त्वं प्रसादात् जय जय कुलदेवि ! स्वीयभक्तं प्रयाहि ॥ २०१६ ॥
भोजनादि विधायाथ स्वस्थीभूय पुनर्वनम् । रुधिरौघमयं कर्तुं व्यापृतोऽभूवमन्वहम् ॥ २०१७ ॥
अन्यदा ग्रीष्मकालेऽहं धनुर्बाणसमायुतः । तूणीरौ पृष्ठतो बद्ध्वा सज्जोऽगच्छं वनाऽवनीम् ॥ २०१८ ॥
अहह ! ऋतुनिदाघोदावतः पूर्णबाधो वनमपि जलहीनं निर्दलो वृक्षवर्गः ।
तपति गिरिवराली हस्तियूथः तृषार्तः, किमिह सुखलवश्चेत् व्याधबाधाप्रवेशः ॥ २०१९ ॥
पुष्पावतंसितश्रोत्रः रम्योपनतक्रमाम्बुजः । वन्यमातङ्गमन्वेष्टुं व्यचरं परितो वनम् ॥ २०२० ॥
क्षुधातृषाकुलो भूत्वा न प्राप्तमृगया पशुः । आतपेन च दुःखेन म्लानवक्त्रो वने भ्रमन् ॥ २०२१ ॥
गङ्गातीरं गतस्तत्र कृतस्नानं बहिर्गतम् । सद्यो गिरिसमं तुङ्गमद्राक्षं द्विरदं वरम् ॥ २०२२ ॥
मया विज्ञानमेवं यदेषोऽत्रत्यो न सम्भवेत् । गङ्गावनविहारी तु नेदृशः क्वापि लभ्यते ॥ २०२३ ॥
रम्यरोमालिदीप्ताङ्गो नैतादृक्षो द्विपो मिलेत् । अतोऽयं द्विरदोऽरण्यादन्यस्मादागतोऽस्ति वै ॥ २०२४ ॥

स तु दन्तविहीनोऽपि मृगयाऽऽनन्दकारणम् । वध्य एवाऽभवन्नूनं द्विरदो वनसम्भवः ॥ २०२५ ॥
व्याधानां नियमेनाऽतः भूत्वैकाग्रमनाः परम् । लक्ष्यीकृत्य गजेन्द्रं तममुञ्चं जविनं शरम् ॥ २०२६ ॥
अत्युच्चगस्तु बाणोऽसौ नावधीत् कौञ्जरं वपुः । चक्रवाकोऽभवत् कश्चिद् विद्धो दैवनियोगतः ॥ २०२७ ॥

पक्षारवेण मदमत्तमिभं सरःस्थं व्याधागमं सपदि बोधयितुं सचक्रः,
ऊर्ध्वं गतोऽपि मुमुचे नहि मृत्युना तु व्याधान्मुमोच करिणं तदहो प्रशस्यम् । ॥ २०२८ ॥
तनुगतनवदुःखोद्रेकखिन्नाऽन्तरात्मा सकलकरणदाहक्षीणतां यामुवाह
झटिति रटिति रिक्तो रक्तसिक्तोत्तमाङ्गोऽभवदपि च यथाऽसौ मूक आ वावदूकः ॥ २२२९ ॥

दुःखेन दूयमानस्य चक्रवाकस्य तस्य वै । पक्षश्चैकस्तदा छिन्नः पपात धरणीतले ॥ २०३० ॥
भ्राम्यन् जलेऽपतत् तूर्णं व्यथितम् स विहङ्गमः । तेनाम्बुलोहितं जातं लोहिताम्बुनिधेरिव ॥ २०३१ ॥
तस्य भार्या रुदन्ती च परिभ्राम्यन्त्यनुक्षणम् । मृतं तं परितः शोकातुरा दीनोदडीयत ॥ २०३२ ॥
तेनोत्पन्नदयश्चाहमपि लग्नः प्ररोदितुम् । विलपन्नित्यवोचं च रे ! रे ! किं विहितं मया ! ॥ २०३३ ॥
पक्षियामलपरस्पराश्रयं, प्रेमबन्धमितरो न बोधते । मूकशोकभरमग्नमानसोऽप्रसन्नदेह इतरश्च मुञ्चति ॥ २०३४ ॥
मिथुनं स्नेहसम्बद्धं महादुःखे निपातितम् । जीवति मे पतिरेवं सोऽयं मत्वा विमुञ्चति ॥ २०३५ ॥

तच्छरीराच्छरं तीव्रमकार्क्षीत् साऽतियत्नितः । चिरं निश्चेतनं दृष्ट्वा गताऽसुं निश्चिकाय सा ॥ २०३६ ॥
अदृश्यः सोऽभवत् तावन्मातङ्गस्तु द्रुतं व्रजन् । मयाऽपि चक्रवाकः स तस्मादुद्धृत्य यत्नतः ॥ २०३७ ॥
सुखप्रदे तले गाङ्गे स्थापितः सैकतेऽमले । ततः पावकसंस्कारो विहितो बन्धुवच्छुचा ॥ २०३८ ॥
तदैव ज्वलिते वह्नौ चक्रवाकवधूरपि । पतित्वा स्वामिना सार्द्धं भस्मसादकरोद् वपुः ॥ २०३९ ॥
तद्विलोक्य भृशं तमोदीर्णचेता विषण्णधीः । पश्चात्तापपरो भूत्वा विलपन्नित्यचिन्तयम् ॥ २०४० ॥
दम्पत्योः सुखिनोर्नाशो मयाऽज्ञेन कथं कृतः । नियमाः कुलधर्मस्य पालिताः सकला मया ॥ २०४१ ॥
नियमश्च तथाप्यद्य विनाशः सहसाऽजनि । ईदृग्विहारतश्चैतत्कुलधर्माद् बिभेम्यहम् ॥ २०४२ ॥

" कारुण्यपूर्वककुलाऽऽचरणं स धर्मः, प्रत्येकजातिविहितः कुलधर्म उक्तः ।
तद्धर्मशुद्धनियमप्रतिपालको यो गच्छेत् स उत्तमगतिं नहि तत्र दोषः " ॥ २०४३ ॥

कथं कुर्यामहं तादृग् जीवनं पापसंकुलम् । तस्मात् प्राणपरित्यागो वरं पापनिरोधकः ॥ २०४४ ॥
एवमात्मविनाशाय देहं त्यक्तुं मया स्यात् । तद्धवश्च शोकार्त्या चिताग्नौ संहुतं वपुः ॥ २०४५ ॥
स्वकुलस्य सदाचारः पालिता विधिना मया । पश्चात्तापोऽप्यभूद् भूयान् मदाचरितकर्मणा ॥ २०४६ ॥
तथा तज्जन्मनो मेऽभूद्विषादोऽतीव्रवेदनः । पापार्जनादरण्यानीसंचारिजीवमारणात् ॥ २०४७ ॥

" अयि नाथ ! ममास्ति जीवनं, परमं नीचमहो ! यदेकतः । परतः खगयुग्महिंसनं यदभूच्चाऽनवधानतो हहा ! ॥ २०४८ ॥
नहि किञ्चिदपीह कारणं यदहं दीनमहो ! स्वभावतः । रमते प्रकृतिस्थितं सदा, भवितव्यं स्वयमेव जायते ॥ २०४९ ॥
न कृतं सुकृतं किमप्यहो ! परपीडैव सदा कृता मया। विफला मम सा मनुष्यता धिगिदं मे किल पापजीवनम् ॥ २०५० ॥
यदिदं विहितं स्वजीवनं कुकृताराधनतः सदासुखम् । हतकोदरहेतवे हि तत् क सुखं मे परतो भविष्यति ॥ २०५१ ॥
सुकृताश्रयिणा समन्ततः सुखमस्त्येव सुपूर्णमैहिकम् । पुनरस्ति च पारलौकिकं सुकृती क्वापि न चावसीदति ॥ २०५२ ॥
पशुतुल्यकुकृत्यसेविनां प्रसृतं दुःखमहो पदे पदे । जननीपितृकामिनीभिरावसतो मे कुकृतेर्न चोद्धृतिः ॥ २०५३ ॥
वनवास इहाऽविदु.खदस्तदलं सम्प्रति जीवनेन मे । पितृशिक्षितरीतिरात्मना कृतकारेण न पालिता हहा ? ॥ २०५४ ॥
अनुजीविनमत्र पालितुं स्वहितांस्त्रियमान् सहं कुरु । सुधियं वितर प्रभो ! पुनः सुखिनं मां कुरु दीनवत्सल ! ॥ २०५५ ॥
सुखिनोऽथ जनाश्च दुःखिनस्तव सर्वेऽपि वशा हि हे प्रभो ! । वितराऽतिसुखं च दुःखतः सहसा मां परितोऽथ पालय॥२०५६
नरतामथ देहि नाथ ! हे ! विपिने चाऽत्र कदापि साधवः । सहसा मिलिता न मानिता शुकनानामतिदोषदर्शनात् ॥ २०५७ ॥
इति दुष्कृतमेव मे परं न च तत्पादरजो मया धृतम् । न च तत्कथिता सुधामयी हितदा हा ननु देशना श्रुता ॥ २०५८ ॥
न च ते शुभनाम कीर्त्तितं न दया प्राणिषु हा मया कृता । तदिदं नरजीवनं मया फलितं नैव मुधैव जीवितम्॥ २०५९ ॥
न मयाऽऽचरणं निरीक्ष्यतामधमं मां जगदीश ! पालय । इति चारु विलप्य संसृतेर्विरतोऽसौ मरणार्थमुद्यतः " ॥ २०६० ॥

पश्चात्तापेन तेनैवं तदानीं शुभकर्मणा । निरयार्होऽपि नीचोऽहं गङ्गोदीच्यां निवासिनः ॥ २०६१ ॥
भूयिष्ठवसुपूर्णस्य महेभ्यव्यवहारिणः । सद्मनि श्रेष्ठिवर्यस्य जनिः लेभे यशस्विनः ॥ २०६२ ॥
अनेककर्षकावासो नानासस्यविराजितः । उत्सवैः सन्ततं रम्यो काशीदेशोऽस्ति ऋद्धिमान् ॥ २०६३ ॥
यत्राऽनेके जनायन्ति पद्मपूर्णजलाशये । सुरभिकुसुमोद्यानवीथीषु च मुदाशये ॥ २०६४ ॥
निर्मलाम्बुसमापूर्णगङ्गातीरोपरि स्थिता । वाराणसीपुरी तत्र द्वारिकेव विराजते ॥ २०६५ ॥

क्वचिच्च युवयोगिनो मनसि धारणां कुर्वते, तपस्विजनमण्डली तपति कुत्रचिन्नैकधा
द्विजास्त्रिपथगातटे विदधते क्वचिद् वन्दनां विलासिनिवहाश्चिराय विलसन्ति नत्ताः क्वचित् ॥ २०६६ ॥

"काश्याख्यदेशे परमा पवित्रा वाराणसी नाम पुरी चकास्ति ।
यस्यां पुरा तीर्थकरा अनेके चानेकवारान् व्यचरन् समृद्धया ॥ २०६७ ॥
श्रीमान् प्रतिष्ठितनृपो जनको यदीयः पृथ्वी यदीयजननी श्रीसुपार्श्वनाथः ।
हेमाभकान्तिरभवज्जिनराजराजः, श्रीस्वस्तिकं लसति लाञ्छनमस्य यस्य ॥ २०६८ ॥
यश्च प्रभुश्च्यवनजन्मसुराज्यकालमासाद्य नीतिविधया च विधाय राज्यम् ।
संसारवैभवमपास्य च वर्षिदानं कृत्वा स्वयं किल ललौ जिनराजदीक्षाम् ॥ २०६९ ॥

स्वं घातिकर्मनिकरं च समाप्य नाथः संप्राप्य केवलमतोऽस्तुमन्यजीवान् ।
संतारयन् शुभददेशनयाऽथ संघमस्थापयत् करुणया शुभधर्मधामः " ॥ २०७० ॥

नृपोऽश्वसेनो जनको यदीयो वामाभिधाना जननी यदीया ।
नीलाभकायो नवहस्तमानः स पार्श्वनाथोऽभवदत्र पुर्याम् ॥ २०७१ ॥

कौमारे कमठाख्ययोगिविहिते जाज्वल्यमानेऽनले प्रायोऽर्धार्धदग्धकाष्ठतलतो नागं स चक्रे बहिः ।
जीवन्तं भुजग नमस्कृतिमहामन्त्रं समश्रावयत्, मृत्वाऽसौ धरणेन्द्रनामकसुरो जातः प्रभावान्वितः ॥ २०७२ ॥

राजीमतीनेमिजिनेन्द्रचित्रं विलोक्य वैराग्यमथाऽऽशु लेभे ।
लोकान्तिकानां विनयाच्च तीर्थं प्रवर्तयामास विधाय दानम् ॥ २०७३ ॥

विनाश्य दानेन जगद्दरिद्रतां त्यक्तस्वतन्त्रद्रवैभवक्रमः । गृहीतदीक्षः कमठोपसर्गजं संसह्य लेभे वरकेवलं विभुः॥ २०७४ ॥

रचयति धरणेन्द्रे पादयोर्दिव्यपूजां, विदधति कमठे तं घोरघोरोपसर्गम् ।
उभयसुरसमानस्त्यक्तमानापमानः, प्रभुरतिकरुणार्द्रः पार्श्वनाथो बभूव ॥ २०७५ ॥

न कदापि क्वचिद्देशे श्रूयते न तथाऽऽगमे । श्रीपार्श्वात्साधुतः साधुः कर्मणात् खलतः खलः ॥ २०७६ ॥

कदापि गङ्गास्वतटासकायोत्सर्गे विभुं क्षालयति स्म पादे । तद्दृष्टचित्तास्तु तत्रात् सुरेन्द्रो जाता ततः सर्वनदीषु पुण्या ॥२०७७॥

क्वचिद्वापिकाऽऽरामराजी विचित्रा तडागाः क्वचित्क्वचित् सन्ति कूपाः ।
क्वचिन्मन्दिराणि क्वचित् सत्रशाला ततः सर्वथा भाति वाराणसीयम् ॥ २०७८ ॥
सर्वर्तवोऽस्यां तु सदा वसन्ति वनस्पतीनामियमिष्टभूमिः । सदाफलाद्वृक्षलतातिश्चकास्ति सर्वाणि धान्यानि भवन्ति चात्र ॥२०७९॥
नानाविधा दार्शनिकाः स्वतत्त्वं विचारयन्ते समभावतश्च । स्याद्वादमेनाऽनुसरन्ति तत्र वसन्ति सम्पत्सुखशालिनश्च ॥२०८०॥
स्वर्गं न चेच्छन्ति सदात्ममग्नास्तत्त्वानि तत्तत्समयेऽनुभूय । नाशास्वते भाति सुखं सुखित्वात् पूर्वापवर्गं सुधिया स्मरन्ति॥२०८१
सरित्तरङ्गमालास्तत्प्राकारत्वं प्रपेदिरे । यस्यां व्यापारिणो नैके वसन्ति विपुलर्द्धयः ॥ २०८२ ॥
प्रभूतमूल्यनैपथ्यैर्भूषितस्तद्वधूजनः । कल्पवृक्ष इवाभाति विडम्बितसुराङ्गनः ॥ २०८३ ॥
लक्षैरेव प्रकुर्वन्ति सर्वेऽपि व्यवहारिणः । क्रयं च विक्रयं चापि भृशोत्साहेन यत्पुरे ॥ २०८४ ॥
तेषां हर्म्याणि राजन्ति सान्तराणि पृथक् पृथक् । तत्रस्तदङ्गणेष्वेव न किन्तु परितो गृहम् ॥ २०८५ ॥
भित्तीनां मूलपर्यन्तं रविरुस्त्रावलिं निजाम् । वितनोत्युज्ज्वलां रम्यां दर्शयन् स्वीयवैभवम् ॥ २०८६ ॥
तत्रैकस्य महेभ्यस्य प्रासादे जन्म मेऽभवत् । पितृसंकेतितं मेऽभून्नाम रुद्रयशा इति ॥ २०८७ ॥
एकादशेऽह्नि प्रियपुण्यकाले स्वगोत्रजानां सविधे प्रमोदात् । नामक्रियां तज्जनको विधत्ते तन्नाम तत्तुल्यफलं प्रदत्ते ॥ २०८८ ॥
कुलाचारक्रमेणाऽहं लेखनाद्याखिलाः कलाः । अनायासोऽल्पकालेन गुरोः शिक्षितवान् मुदा ॥ २०८९ ॥

लिखति शिशुरिहस्थस्तेन सा लेखशाला पठति च पुनरस्यां तेन सा पाठशाला ।
गुरुभवन उषित्वाऽधीयते येन बालैरथ गुरुकुलवासः कथ्यते तेन विज्ञैः ॥ २०९० ॥
सम्पद्विलोपके शीघ्रं सर्वदर्गुणसद्मनि । कलङ्कादायके द्यूते संलग्नं मम मानसम् ॥ २०९१ ॥
" व्यसननिचयमूलं दुर्गतेर्वर्गकूलं । गुणगणप्रतिकूलं सर्वमायानुकूलम् ।
धनवपु इति नाशे द्यूतमेवास्ति मूलं, नलनृपप्रभृतीनामस्ति दृष्टान्तमत्र " ॥ २०९२ ॥
" द्यूतं सर्वापदां धाम द्यूतं दीव्यन्ति दुर्धियः । द्यूतेन कुलमालिन्यं, द्यूताय श्लाघतेऽधमः ॥ २०९३ ॥
राज्यश्च्युतिं वल्लभाया वियोगं, द्यूतान्नलः प्राप गतोरुभोगम् ।
प्रचण्डिता मण्डितबाहुदण्डास्ते पाण्डवाः प्रापुररण्यवासम् ॥ २०९४ ॥
द्यूतं च मांसं च सुरा च वेश्या पापर्द्धिचौर्यं परदारसेवा ।
एतानि सप्तव्यसनानि लोके, घोरातिघोरं नरकं नयन्ति " ॥ २०९५ ॥
तेनैव व्यसनेनेह व्यवहारविदो जनाः । नैकधा नष्टविश्रब्धा भवन्ति क्षुद्रबुद्धयः ॥ २०९६ ॥
छद्मने त्यक्तकारुण्या जेतुमुन्मत्ततांजुषः । प्रथिलीभूय जल्पन्ति सद्गुणान् विस्मरन्ति च ॥ २०९७ ॥

---

१ " न मादिपरः " पिङ्गलच्छन्दसूत्रम् । मपूर्वमक्षरं लघुः " ॥

तस्मिन्नेव समासक्तो द्यूते चौर्यरतस्तथा । दावाग्निनेव संतप्तस्तेन मत्कुलपर्वतः ॥ २०९८ ॥
गृहाणां भेदनं पुंसां यात्रिकाणां च लुण्टनम् । एष एव ममोद्योगो मुख्यतः समजायत ॥ २०९९ ॥
ईदृशैर्मदसत्कृत्यैर्मत्कुटम्बिजनोऽभवत् । लोके नताननः सर्वनिन्द्यश्चाहं जनेऽभवम् ॥ २१०० ॥
अन्यदा परसम्पत्तिमपहर्तुमना मुदा । खड्गहस्तोऽव्रजं गुप्तं निशीथे राजवर्त्मनि ॥ २१०१ ॥
तथाप्याकर्णितः पौरैः पद्रवो नश्यतो मम । कोलाहलेऽथ भीतोऽहं क्षीरिकावनमाश्रयम् ॥ २१०२ ॥
" जनान्तिकं जगादेति, सा तरङ्गवती पुनर्मिल्लोपकारं किं वच्मि, येन नीता शुभां दशाम् ॥ २१०३ ॥

स्थित्यन्तरं स्थितिवशः समुपैति जन्तुस्तस्माद् बुधा जगदिदं कथयन्ति सार्थम् ।
वैश्याच्च चौर इति सोऽप्यथ लुण्टकारी, तस्माच्च साधुरिति मे ननु शर्मणोऽभूत् ॥ २१०४ ॥

नीचस्थितिं स्वां परिमुच्य विद्वान्, उच्चैस्थितिं गच्छति चेभिजेष्टया ।
स एव सर्वोच्चपदं प्रलभ्य, तस्मात् परान् स्वेन समान् करोति ॥ २१०५ ॥

जगत्समग्रे प्रकृतेर्हि राज्यं, तदन्तराऽऽसाद्य करोति कर्म ।
नीचस्थितं प्रांशुमथो विधत्ते, उच्चैः स्थितं तं शुभसत्फलाय " ॥ २१०६ ॥

विन्ध्याद्रिमण्डने तस्मिन् वने सर्वेष्टपूरके । व्याधानां मृगया यत्नं विनैव सुलभाऽभवत् ॥ २१०७ ॥

"क्वचित् स्थले शान्तसमानभूमावारामराजी समुपैति शोभाम् । अपक्कपक्काभिरमाभिराम्रैर्द्राक्षाभिरत्र भाति सुधासमाभिः ॥२१०८॥
पक्वैः रसालै रसरम्यरूपै राजादनानां च फलैरमेयैः । बृहत्फलैर्नूतननालिकेरैः करोति च स्वातिथिपूर्वपूजाम् ॥ २१०९ ॥
रम्भावलीलम्बितलुम्बनम्रा विनेयनेयं विनयं दधाति । अत्युच्चखर्जुरततिः फलानि स्वादूनि भिन्ना ननु वर्षतीव॥ २११० ॥
जम्बूवनं प्रावृषि नीलवर्णां रसाढ्यनम्रं भ्रमरी विदीर्णम् । स्वयं पतत्पातकबालवृन्दं संपातयत्येव मिदेलिमं तत्॥ २१११ ॥
पत्रान्तराले परिणामपक्कं निदर्शयदर्षयते मनुष्यान् । जम्बीरजालं विहितालवालं फलाङ्कवालं परिवर्धयच्च ॥ २११२ ॥
सुधारसानि प्रतिपुष्पजानि श्रीबीजपूराणि बहूनि भान्ति । सुरङ्गनारङ्गवनं घनं च फलन्ति यस्मिन् मधुदाडिमानि ॥ २११३ ॥
क्षीराम्लकानां गहनं फलाढ्यं सत्पीलुवृक्षैः परिवेष्टितं च । स्कन्धे फलानि प्रतिगृह्य चैवे तिष्ठन्ति रम्याः पनसा स्वभागे ॥२११४ ॥
पतन्ति बीजानि सुदाडिमानां पुष्पाणि चैषां सुरभीणि कानि । पृथ्वीजनन्याः परिपूजयन्ति पादानि मे पादपराशयश्च ॥२११५॥
अपाककाले मधुराम्लवन्ति फलानि शाकप्रतिमानि तत्र । चिञ्चाम्लिकानिम्बुफलानि चात्र मवृव्यञ्जनानीति रुचिप्रदानि ॥२११६॥
शृङ्गाटिकाली क्वचिदस्ति गुन्दीलुम्ब्रावलीयं बदरीवनं च । पुष्पैः फलैश्चिर्भटिका लताश्च शाकालयोऽन्याश्च चिरं फलन्ति॥ २११७॥
पेयानि द्राक्षाकृतपानकानि पिबन्ति तत्स्था नलिनीदलैश्च । आस्वादयन्ते सलिलानि भित्त्वा क्वचित्तयाश्रीफलमध्यजानि ॥२११८॥
जनान्तरं पक्वसुनागवल्लीदलानि चैलालवलीलवङ्गैः । स्वादूनि तज्जातिफलैश्च कृत्वा खादन्त्यपक्वकमुकैश्च सार्धम् ॥ २११९ ॥
भाति क्वचित् सच्छतपत्रजालं सचम्पकाऽशोककुसुमानि सन्ति । क्वचिच्छताकेतकीकाचमल्ली कौन्दीलतापुष्पचयं सृजन्ति॥ २१२० ॥

श्रीमालती वा मुचकुन्दवृक्षाः सुमैश्च कुर्वन्ति स्थलं मनोज्ञम् । लुण्टाकलोकोद्भवभीतिहेतोश्चैतत्स्थलं शून्यमिव प्रभाति ॥ २१२१ ॥

तीर्थस्थलं कुत्रचिदस्ति रम्यं तस्माच्चदूरेऽमि गिरेः शिखायाम् । गूहागभीराऽतिशयेन दुर्गा आसीच्च या दुर्जनराजधानी"॥२१२२॥

व्याधा आधाय शायां विदधति मृगयां नेदियाय द्वयी सा, मायाविष्वेव माया रचयितुमुचिता नैव विश्वासवत्सु ।

बन्यानां पालनार्थे मृगपतिमृगयां कुर्वते ये नरेन्द्राः । व्याधाः किन्तूदरार्थं यदि च विदधते तेऽत्र एवं पतन्ति ॥ २१२३ ॥

वयसां बहवो नीडा डिम्भवृन्दैः सुनादिताः । वृक्षशाखासमाछन्ना बभूवुर्गहने वने ॥ २१२४ ॥

लुण्टकानां गूहा नैकाभयदा चाऽभवत्तथा । विविधा पादपश्रेणी दिवाप्यन्धीचकार वै ॥ २१२५ ॥

तत्काननैकदेशस्थां गूहामेकामहं गतः । द्वारेण महता युक्तां ख्यातां 'सिंहगूहाख्यया' ॥ २१२६ ॥

तस्यामस्त्रभृतः शूरा न्यवसन् स्तैन्यजीविनः । आनन्दं भेजिरेऽजस्रं लुण्टयित्वा वणिग्जनान् ॥ २१२७ ॥

चौर्यकलासु संघैक-साध्येष्वपि च कर्मसु । निपुणा दस्यवः सर्वेऽप्यासंस्तद्देशवासिनः ॥ २१२८ ॥

दस्युत्वेऽस्ति कला च साहसमथो निर्भीकता स्वस्थता, चापल्यं बहुवेषिता गुणिगुणाराविलमुर्जस्विता ।

एतेस्त्वे निपुणा भवन्ति सततं दीनांश्च रक्षन्ति ते, मर्यादां न हरन्ति तस्करगणास्तान् संस्मरन्ति प्रजाः ॥ २१२९ ॥

तेषां दयालवः केचिद् ब्राह्मणान् श्रमणान् स्त्रियः । रुग्णान् बालांस्तथा वृद्धान् पीडयन्ति स्म न क्वचिद् ॥ २१३० ॥

बलविभवमदान्धान् दृष्टिमुद्घाटयन्तो, हृतपशुधनधान्यैर्दुर्बलान् वर्धयन्तः ।

स्थविरशिशुरुजार्त्तस्त्रीजनान् सान्त्वयन्तः, नृपतय इव चौराः नो मुदे कस्य साधोः ? ॥ २१३१ ॥
घाताः सहस्रशस्तेषां लुण्टने जज्ञिरे तनौ । तथाऽपि तेषामुत्साहः द्विगुणः समवर्द्धत ॥ २१३२ ॥
गत्वाऽहमपि तत्रैव स्तेनवृत्तिविधायकः । नैपुण्येन मतस्तेषामतिष्ठं जीविकेच्छया ॥ २१३३ ॥
भल्लप्रियोऽभिधानोऽभूत्तस्य वृन्दस्य नायकः । स सदैव निजे हस्ते दृढं कुन्तमधारयत् ॥ २१३४ ॥
धैर्यवान् सत्त्वसम्पन्नः सदोत्साहोऽकुतोभयः । भुजङ्ग इव सर्वेषां भयदो भीषणाकृतिः ॥ २१३५ ॥
परःसहस्रदस्यूनां पोषणायाऽवनाय च । पितेवासंस्तुतॉल्लोकान् बहुधाऽपीडयद् बलात् ॥ २१३६ ॥
निजबाहुबलेनैष विश्रुतो बलवानिति । तेनैव तस्करैः स्वीयनायकत्वे नियोजितः ॥ २१३७ ॥
अनयंस्तत्समीपं मां स्तेनाः स्नेहप्रपूरिताः । सोऽपि प्रेमार्द्रभावेन मयाऽऽलापं समाचरत् ॥ २१३८ ॥
ततः स्तेनगणः सर्वः सादरं मां व्यलोकत । अतः सुखेन तत्राऽहं न्यवसं भीतिवर्जितः ॥ २१३९ ॥
दुष्करेष्वपिकार्येषु भूरिशौर्यमदर्शयम् । ततः ख्यातिं परां प्राप सादरं प्रचुरं तथा ॥ २१४० ॥
दुष्टानां दमनाय कैरपि पुरा चौर्यं प्रकाशीकृतं, स्वार्थाय ग्लपनाय वा विदधते ये द्वेषदुष्टाऽऽशयाः ।
हन्त्येव वधबन्धनादिभिरथाऽऽगाराच×निष्काश्य ते, मृत्वा दुर्गतिमेव केवलमहो ! गच्छन्ति रक्षेच्च कः ? ॥ २१४१ ॥

× " संबन्धकभूतकृदन्तस्य प्रयोगः "

कियत्काले गतेऽत्रस्थैल्लोका मन्नाममात्रतः । युद्धे पलायने चैव, धनिपृष्ठानुधावने ॥ २१४२ ॥
सदैवाऽस्थापयत्पार्श्वे नायको मां प्रमोदतः । निर्दयाऽन्तकदूताभशक्तिभृदादिनामभिः ॥ २१४३ ॥
अभ्यजानन् सदा तत्र सर्वे मां सहचारिणः । वैरिणोऽदारयं शौर्यान्मित्राणि पर्यतोपयम् ॥ २१४४ ॥
तनुमप्यार्पयं द्यूते पणबन्धतया मुहुः । एवं चिरं निषादानां गूहायां सहचारिभिः ॥ २१४५ ॥
स्थित्वाऽहं यमराजेन तुल्यां कीर्तिमवाप्नुवम् । सर्वत्राऽऽत्मजयशौर्यकार्येषु तत्परोऽन्वहम् ॥ २१४६ ॥
स्वकर्त्तव्यपरास्माकं मण्डली मुदिताऽन्यदा । चौर्यस्थलं समासाद्य तस्थौ द्रव्यापहारिणी ॥ २१४७ ॥
तावत्तत्र समायातं मिथुनं यौवनोद्भटम् । गृहीत्वा तत्समायाताऽभूषयद्भूषणैर्गृहम् ॥ २१४८ ॥
तद्वृत्तान्तं समाकर्ण्य प्रागेव तद्विलोकनात् । कालिकायाः स्तुतिं कर्तुं केचिच्चारेभिरे मुदा ॥ २१४९ ॥
अस्मन्नेतुः समीपे तौ समानीतौ च हर्षतः । दम्पती पश्यतस्तस्य दिव्याभरणभूषितौ ॥ २१५० ॥
लावण्येन स्ववपुषो जह्राते च मनो भृशम् । किन्तु देवाङ्गनातुल्यां देव्यै तां दातुमैहत ॥ २१५१ ॥
कालिकाया भयाद् यस्माद् विधातुं रमणीं निजाम् । शक्तिमान्नाभवत् स्वीयतत्तद्धर्मभयादपि ॥ २१५२ ॥
भयात्तु लोकस्य कुकर्मकर्ता सुकर्मकर्ताऽपि कदापि लोक-भयात् धर्मस्य कुकर्मकर्ता न स्यात् सुकर्मैव करोति किञ्चित् ?॥२१५३॥
तथाप्यसौ निजैर्भिल्लैर्यथेच्छं तदलंकृतीः । अहारयच्चरत्नादि तेभ्य एवार्पयत् समम् ॥ २१५४ ॥

पश्चात्स मामवोचद् यदाऽऽगामिनवमी दिने । इमौ काल्यै प्रदातव्यौ बलिरूपेण निश्चितम् ॥ २१५५ ॥
ततोऽहं योजितस्तेन तयोः संरक्षणाय वै । चिन्तया मरणस्यैतावरोदिष्टां भयाकुलौ ॥ २१५६ ॥
दीनाननौ तथापि द्वावनयं मम वेश्मनि । पुरुषे च मया बद्धे व्यलपत् तद्वधूर्भृशम् ॥ २१५७ ॥
तथाहि—" अयि महाप्रभो ! शुद्धजीवने सति विभेम्यहं क्रूरमृत्युना ।
समय एष मे भीमतामितः सपदि नाथ हे ! रक्ष रक्ष माम् ( ललितछंदः ) ॥ २१५८ ॥
मरणमुत्तमं यत्समाधितो कुसमयस्य वै निन्दिता मृतिः । तदतिनिन्दितान् मृत्युपाशतो जिनवराऽधुना रक्ष रक्ष माम् ॥
सुतपसा तथा श्रद्धयाऽऽर्द्रया विमलशीलने नाथ ! सन्मतिः । व्रतवशीकृतं जीवनं वरं सफलजन्मनं मुक्तयेऽस्ति यद् ॥२१६०॥
विहगजन्मनि प्रेमजीवनं शुभमहो ! भवेद्धर्मलब्धये । गुरुवरे तथा देवधर्मयोर्दृढमतिर्दृढश्रद्धया सह ॥ २१६१ ॥
स्मृतिरियं शुभा मनुनमस्कृतेरिति+ फलानि सज्जीवनस्य मे । नयति यद्विधिर्विषमितस्थितिं तदिति नाथ ! तस्याः समुद्धर ॥
भवेऽस्मिन् मानुष्ये सुकुलभवसंस्कारवसतो, व्रताऽर्चासद्दानप्रभृति शुभकर्माणि विधितः ।
कृता निःश्रेयोऽर्थं तदिति मम पापानि प्रसभं, विनश्यन्तु श्रेयः सुखरसमयं देहि भगवन् ! ॥ २१६३ ॥
सकलजन्तवः कर्मकुण्ठिता जिनवर ! क्षमस्वाऽपराधिनीम् । अहमपि प्रभो ! तत्क्षमापये तदिह रक्ष मां हे कृपानिधे ! ॥२१६४

+ मन्त्रम् ।

अपरजन्मनः पुण्यतः स्मृतं किमपि दूषणं शेषतां गतम् । तदिह बन्धनं जातमस्ति नौ करुणया प्रभो ! तत्समुद्धर ! ॥२१६५॥
भवसमुद्धवेरीहनं च नौ विषयवाञ्छया वर्जितं मनः । अमृतपानमिच्छन्ति केन वै गरलपानमिच्छन्ति केपि न ॥ २१६६ ॥
त्वमसि कामदस्त्वां विना न मे, कथय वर्तते को जगत्तले । शरणवर्जितं नाथ ! तेन मां सपदि रक्ष मां रक्ष मां प्रभो!२१६७
एतत्सकरुणाक्रन्दगीतश्रवणमात्रतः । हृदि कारुणिका भावा जागृता मम सत्वरम् ” ॥ २१६७ ॥
तदुदन्तश्रुतेर्ज्ञाता जातिस्मृतिरहो ! मम । स्वापराधं विदित्वैवं तस्मादुद्धारिताविमौ ॥ २१६८ ॥
सर्वेषामपि पापानां सहसा क्षपणाय च । स्वयं तस्माच्च मृत्वाऽपि रक्षणीयाविमौ मया ॥ २१६९ ॥
मानुष्येऽयं महान् धर्मो नहि हेयः कदाचन । विवेके सति तत्त्यागो महागः कथ्यते बुधैः ॥ २१७० ॥
स्वस्वामिस्नेहतो वक्षो जघान पूत्कार च । तेन कारास्थिताः सर्वा जीवने विरसा निजे ॥ २१७१ ॥
वनितास्तत्र संमिल्य दयावासितचेतसा । साकाङ्क्षा दम्पती प्रष्टुं तदुदन्तं प्रचक्रतुः ॥ २१७२ ॥
कस्मादागम्यते ? कुत्र गन्तुमीहा च वर्तते । तस्करकरसात् कस्माज्जातौ कथय तं युवाम् ॥ २१७३ ॥
साऽश्रुनेत्रावदद्योषिदस्मद्वृत्तान्तमादितः । श्रूयतां सावधानाभिर्दुःखदं शृण्वतामपि ॥ २१७४ ॥
चम्पाऽन्तिकस्थितेऽरण्ये गङ्गातीरविभूषणे । गैरिकवर्णौ चक्राह्वौ स्नेहिनावाऽऽस्व दम्पती ॥ २१७५ ॥
पत्या साकमहं गङ्गोपरि नैपुण्यतोऽतरम् । कल्लोलाः शुशुभुस्तेन, सैकतेन युता इव ॥ २१७६ ॥

अन्यदैकः समायातो व्याधस्तत्र सकार्मुकः । आरण्यकं गजं हन्तुमुद्यतेन पतिर्मम ॥ ॥ २१७७ ॥
तेनाऽहन्यत बाणेन लक्ष्यस्य भ्रंशनेन हि । शोचन् पुनः पुनः सोऽथ वह्निसंस्कारहेतवे ॥ २१७८ ॥
गङ्गातटे चितां कृत्वा गताऽसोरदहद् वपुः । अहमप्यनुगन्तुं तं चिताग्नौ न्यपतं शुचा ॥ २१७९ ॥
मृत्यैवं यमुनातीरे नगरश्रेष्ठिनो गृहे । कौशाम्ब्यां तनया रम्या जाताऽहं कान्तिशालिनी ॥ २१८० ॥
तस्मिन्नेव पुरे कीर्त्या समुद्रपारया तथा । ख्यातस्य श्रेष्ठिनो गेहे सुतः सोऽपि व्यजायत ॥ २१८१ ॥
आवाभ्यां वर्द्धमानाभ्यां चित्रपट्टनिरीक्षणात् । जातपूर्वभवस्मृत्या समुपालक्षितौ मिथः ॥ २१८२ ॥
तेन संयाचितो मां हि मत्तातो नान्वमन्यत । मया तत्सन्निधौ दूती प्रहिता प्रेमपूर्णया ॥ २१८३ ॥
तथाऽन्यदा तमस्विन्यां रागेणाहमपीरिता । प्रासादमगमं भव्यं मत्पतेः सुषमायुतम् ॥ २१८४ ॥
मदीयतातभीत्या च प्लवमारुह्य सत्वरम् । पलायितौ नदीतीरे गृहीतौ लुण्टकैस्ततः ॥ २१८५ ॥
तरुणी साऽब्रवीदित्थं स्वानुभूतां कथां निजाम् । सुखदुःखमयीं सर्वां रुदन्ती भृशदुःखिता ॥ २१८६ ॥
अहं तच्छ्रवणेनैव स्मृतप्राग्भवचेष्टितः । पूर्वकर्मविषण्णात्मा भ्रान्तो मूर्च्छामवाप्नवम् ॥ २१८७ ॥
लब्धसंज्ञस्ततो भूत्वा ह्यस्मार्षं पूर्वजन्मनः । मातरं पितरं चैव पत्नीं धर्मं कुलस्य च ॥ २१८८ ॥
तया स्त्रिया स्मृतिः स्वप्ने यद्व्यलोकि यथातथम् । मयाऽपि तत्स्मृतं सर्वं हृदयं तेन मेऽद्रवत् ॥ २१८९ ॥

समानकालाश्रितभावबोधे स्वतुल्यवाक्यश्रवणं हि हेतुः । पर्याप्तमाकर्ण्य विभिन्नचित्ताः प्रतिक्रमन्ते सहसा मुनीन्द्राः ॥२१९०

मनोवृत्तिर्मदीया तद्दम्पतिपक्षपातिनी । सहसोपकृतिं कर्तुं दधाव पापमुक्तये ॥ २१९१ ॥

मया तदा सुनिर्णीतं यत्पुराऽजानता हतम् । तदेव मिथुनं चक्रवाकयोरिदमस्ति हि ॥ २१९२ ॥

अधुनेदं महादुःखे पतितं युगलं पुनः । मृत्योर्मुखे न संस्थाप्यं ज्ञातं चावसरे सति ॥ २१९३ ॥

स्मृतस्वदोषाः कृतिनो मनुष्यास्तद्दोषशान्त्यै सहसा यतन्ते । धृतोपवासस्मृतदोषहत्यै अस्ताचलं गच्छति तिग्मरश्मिः ॥२१९४॥

पूर्वपापस्य लग्नस्य प्रमादैकवशेन वै । प्रक्षालनं मया कार्यं ध्रुवं प्राणव्ययादपि ॥ २१९५ ॥

तयोः संरक्षणेनैव मम शान्तिर्भविष्यति । अन्यथा शल्यवद् हिंसा मन्मनो व्यथयिष्यति ॥ २१९६ ॥

इत्थं निश्चित्य निर्गत्य गेहाद् बन्धांस्तदीयकान् । तूर्णमेव दयाऽऽविष्टः शिथिलीकृतवानहम् ॥ २१९७ ॥

ततः परिकरं बद्ध्वा खड्गहस्तो निशि स्त्रिया । सहितं पुरुषं ज्ञात्वा स्तेनदर्या बहिर्गतः ॥ २१९८ ॥

भयप्रदं महारण्यं लङ्घयित्वा सुपत्तनम् । यावन्नीत्या वियुज्याऽथ वलितोऽहं गताऽध्वनि ॥ २१९९ ॥

ततः संसारतो भूत्वा विरक्तः शुद्धमानसः । व्यचिन्तयमिति क्षोभाच्चिन्ताग्रस्ते मनस्यहम् ॥ २२०० ॥

पिता न माता न च बन्धुवर्गः किमर्थमेवं प्रचरामि पापम् । पापस्य भोगी न च कश्चिदस्ति, कथं न पुण्याय करोमि यत्नम् ॥

किं वाऽथ पुण्येन च पापकेन, द्वयं हि दोषः कथितो यदार्यैः। आत्मार्थमेव प्रकरोमि यत्नं, संसारमुक्तो हि यतो भवामि॥२२०२

मनो हि मोक्षाय च बन्धनाय मनो नियोज्यं जिनराजमार्गे । एकाग्रतावद्धमिदं मनो मे संसारविच्छेदकरं यतःस्यात् ॥२२०३॥
संसार एवाऽस्ति महान् विचित्रः विचित्रता तस्य विचारगम्या । रम्या न सा तद्विचरामि किं वा, पृष्ट्वाऽथ तं यामि न मेऽस्ति भीतिः
अहो ! कृतं दारुणकर्म घोरं न यस्य निस्तारणमस्ति किञ्चित् । भवद्वये प्राणिविहिंसनं यत्, कृतं तदस्तु स्वकृतौ विरामः ॥२२०५॥
द्वेषो न मे दुष्कृतकारिणोऽस्मात्, रागो न मे स्वामिन एव तस्मात् । किं वा विधर्मेस्थिरमानवानां, सङ्गेन तस्मात्परतो व्रजामि ।
नायकस्य समीपे मे गमनं कथमर्हति । कृतागसः पुनस्तस्य यमदूतोपमस्य वै ॥ २२०७ ॥
चक्षुषोऽग्रे कथं स्थातुं शक्नुयां निर्दयात्मनः । दुष्कार्यं सर्वथा त्याज्यमिति धीरप्यजायत ॥ २२०८ ॥
परिणामसुखार्थिभिर्नरैर्नितरां चेतसि चिन्त्यते ह्यदः । परचित्तशरीरबाधनं करणीयं नहि दुःखयोजनम् ॥ २२०९ ॥
निजाऽनुभूतौ यदि दुःखमस्ति भविष्यति द्राक् तदलं परेषाम् । न तत्र कर्तव्यमिहस्वहेतोर्दुष्कार्यमेतन्मनसो मतं न ॥२२१०॥
यतो लोभविलासाभ्यामद्य यावत्तु यत्कृतम् । दुर्गतिप्रापकं तद्धि महापापं निगद्यते ॥ २२११ ॥
तस्मात्तत्पापशान्त्यर्थं मुक्त्यर्थं च मयाऽधुना । प्रायश्चित्तं विधातव्यमर्हत्सिद्धान्तदर्शितम् ॥ २२१२ ॥
" प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् " ॥ २२१३ ॥
विलासभोगसंसक्तो यो हिनस्त्यपरं जनम् । स मूढो याचते दुःखं स्वयमेवाऽधिकाऽधिकम् ॥ २२१४ ॥
दूरस्थः स्नेहपाशाच्च सैव मुक्तिसुखं व्रजेत् । समानसुखदुःखश्च समानस्तुतिगर्हणः ॥ २२१५ ॥

मानापमानयोस्तुल्य मानसश्च सदा भवेत् । विचिन्त्यैवमया गत्वा वैराग्यादुत्तरां दिशम् ॥ २२१६ ॥
सारल्यनिर्धूतसमग्रदोषो जातो महान्मे विरतेर्विचारः । जिनेन्द्रदेवं शरणं विधाय तत्पादपूतां दिशमाश्रितोऽहम् ॥ २२१७ ॥
तदाश्रये शान्तिरुदेति चित्ते धर्मप्रकाशो भवति ह्यजस्रम् । मेर्वादिपूता दिगियं विरागे नियोजयत्येव जनान् स्वसंस्थान् ॥ २२१८ ॥
कामान् सर्वान् विनिर्धूय संन्यासग्रहणं कृतम् । तुङ्गतालिवने रम्यमलकायाः स्मृतिप्रदम् ॥ २२१९ ॥
गतः पुरिमतालाख्यं नगरं भूरिसम्पदम् । तस्य दक्षिणभागेऽस्ति मारोद्यानाऽतिशायिनी ॥ २२२० ॥
नन्दनाऽऽरामसादृश्यं दधाना वाटिकावरा । हरिद्भिः फलपुष्पौघै राजिता सा समन्ततः ॥ २२२१ ॥
जनस्वान्तव्रजं नित्यं श्रिया प्रीणयते भृशम् । द्विरेफाणां महावृन्दैर्वयसां च विरावतः ॥ २२२२ ॥
समग्रोद्यानसारोऽत्र समाकृष्यैव योजितः । इयती च क्षतिर्यद्वै डयतां पक्षिणां कलः ॥ २२२३ ॥
अलिगुञ्जारवश्चात्र लोककोलाहलेऽमिलत् । उद्याने च वरे तस्मिन् श्वेताभ्रेभ्यो विनिष्क्रमत् ॥ २२२४ ॥
विमानमिव सूर्यस्य शोभनं देवमन्दिरम् । चाकचिक्यकरं चारु जातं मे दृष्टिगोचरम् ॥ २२२५ ॥
उत्कीर्णैः शिलिपभिः काष्टशतस्तम्भैः सुमण्डितम् । विलोकितं मया भव्यं दिव्यतेजोऽतिभासुरम् ॥ २२२६ ॥
तदङ्गणे लसच्छ्राद्धैर्यात्रिकैश्चन्दनादिभिः । पूजितोऽम्बरखण्डैश्च भूषितो वटपादपः ॥ २२२७ ॥
बभूव बहुशाखाभिर्विस्तृतो विगणाश्रितः । सदा रम्याकृतिर्हारी च्छायामण्डलराजितः ॥ २२२८ ॥

आदौ प्रदक्षिणाऽकारि मन्दिरस्य मया ततः । स्थितः पवित्रवृक्षस्य तस्याऽधस्तादहं मुदा ॥ २२२९ ॥
मृदुपर्णाश्च तच्छाखाः परितो विस्तृता भृशम् । द्युतिं प्रसारयन्ति स्म दिगन्तेषु सदा पराम् ॥ २२३० ॥
तत्र स्थितं जनं कञ्चिदपृच्छं नम्रया गिरा । अस्याऽऽरामस्य किं नाम कस्यात्र प्रतिमा वरा ॥ २२३१ ॥
बहुस्थानानि दृष्टानि मया क्वापि कदापि नो । उद्यानमीदृशं दृष्टं भव्यसम्पद् विराजितम् ॥ २२३२ ॥
विदेशिनं स विज्ञाय सद्यः प्रोवाच मां प्रति । शकटमुखनामाऽयमारामो लोकविश्रुतः ॥ २२३३ ॥

---

१ " सकलपुरप्रधाना पूर्विनीताभिधाना, तदनु पुरि तमालं वै पुरं श्रीविशालम् ।
शकटमुखसुनाम्नोद्यानमीशानकोणे, विहृतिवसत एतः श्रीप्रभुर्नाभिजन्मा ॥ १ ॥
वटतरुतलदेशं प्राप्य वासं प्रचक्रे, कठिनमतितपोऽसावष्टमं नाम तेपे ।
तिथिरसितदलीया फाल्गुनैकादशीया, भमपि किल तदासीदुत्तराषाढनाम ॥ २ ॥
प्रथमदिवसभागे चोज्ज्वलध्यानभाजः, त्रिभुवनमुपकर्त्तुः स्वामिनो नाभिसूनोः ।
प्रगटितमथ लोकालोकसत्यप्रकाशि, निरवधिदृढदिव्यं केवलज्ञानमासीत् ॥ ३ ॥
शुभकरसमयेऽस्मिन्निन्द्रसिंहासनं तत्, प्रचलितमिति जैनज्ञानमाहात्म्यतोऽभूत् ।
अवधिवशत इन्द्रो ज्ञाततत्सर्ववृत्तः, हृदि बहु मुमुदे तत्सर्वहर्षैकहेतुः ॥ ४ ॥

इक्ष्वाकुराजवृषभो वृषभोपमो यः, चूडामणिर्निजकुलोद्भवमानवानाम् ।
शौर्यादिसद्गुणकदम्बकराजमानो, लीलालसन्समभवद् वृषभः क्षितीशः ॥ २२३४ ॥
सुमङ्गला सुनन्दा च प्रिये तस्य बभूवतुः । तथाऽऽज्ञापालका पुत्रा जज्ञिरे भरतादयः ॥ २२३५ ॥
हिमाचलं समारभ्य सागरान्तमहीपतिः । जन्ममृत्युविमुक्त्यर्थं स यदा त्यक्तवैभवः ॥ २२३६ ॥
तपस्तेपे तदैतस्य वृक्षस्याधः स्थितोऽमलम् । अनन्तं केवलज्ञानमक्षयं च समासदत् ॥ २२३७ ॥
तेन स्थानमिदं पुण्यमुत्तमं चाभवद् भुवि । अतएवाऽधुनाऽप्येतत् पूज्यते भावतो जनैः ॥ २२३८ ॥
तुङ्गेऽस्मिन् देवभवने तस्यैवाऽऽदिजिनेशितुः । मूर्त्तिः प्रतिष्ठिता भव्या भवतारणनौरिव ॥ २२३९ ॥
निशम्यैवं मयाप्येतद् वृक्षस्य वन्दनं कृतम् । युगादिदेवमूर्तिं च प्राणमं स्तुतिपूर्वकम् ॥ २२४० ॥
प्रथमं पृथिवीपालं प्रथमं मुनिपुङ्गवम् । प्रथमं तीर्थकर्तारं जिनेन्द्रं तं स्तवीम्यहम् ॥ २२४१ ॥
" त्रैलोक्यं सकलं त्रिकालविषयं सालोकमालोकितं, साक्षाद् येन यथा स्वयं करतले रेखात्रयं साङ्गुलि ।
रागद्वेषभयामयान्तकजरालोलत्वलोभादयो, नालं यत्पदलङ्घनाय स महादेवो मया वन्द्यते ॥ २२४२ ॥
यः स्मर्यते सर्वमुनीन्द्रवृन्दैर्यः स्तूयते सर्वनरामरेन्द्रैः । यो गीयते वेदपुराणशास्त्रैः स देवदेवो हृदये ममास्ताम्॥ २२४३ ॥
यो दर्शनज्ञानसुखस्वभावः समस्तसंसारविकारबाह्यः । समाधिगम्यः परमात्मसंज्ञः स देवदेवो हृदये ममास्ताम्॥ २२४४ ॥

निषूदते यो भवदुःखजालं निरीक्षते यो जगदन्तरालम्। योऽन्तर्गतो योगिभिरीक्षणीयः स देवदेवो हृदये ममास्ताम् " ॥२२४५॥
" ऐन्द्रश्रेणिनता प्रतापभवनं भव्याङ्गिनेत्रामृतं, सिद्धान्तोपनिषद्विचारचतुरैः प्रीत्या प्रमाणीकृता ।
मूर्त्तिः स्फूर्त्तिमती सदा विजयते जैनेश्वरी विस्फुरन्मोहोन्मादघनप्रमादमदिरामत्तैरनालोकिता " ॥ २२४६ ॥
किं कर्पूरमयी सुधारसमयी पीयूषतेजोमयी, किं चूर्णीकृतचन्द्रमण्डलमयी किं भद्रलक्ष्मीमयी ।
किं वाऽऽनन्दमयी कृपारसमयी किं साधुमुद्रामयी, अन्तर्मे हृदि नाथमूर्तिरमला नाऽभावि किं किं मयि ॥२२४७॥
धन्या दृष्टिरियं यया विमलया दृष्टो भवान् प्रत्यहं, धन्यासौ रसना यया स्तुतिपथं नीतो जगद्वत्सलः ।
धन्यं कर्णयुगं वचोऽमृतरसः पीतो मुदा येन ते, धन्यं हृत् सततं च येन विशदस्त्वन्नाममन्त्रो धृतः ॥ २२४८ ॥
ये मूर्तिं तव पश्यतः शुभमयीं ते लोचने लोचने, या ते वक्ति गुणावलीं निरुपमां सा भारती भारती ।
या ते न्यञ्चति पादयोरिदयोः सा कन्धरा कन्धरा, यत्ते ध्यायति नाथ ! वृत्तमनघं तन्मानसं मानसम् " ॥ २२४९ ॥
स्तुत्वेति बहिरागत्याऽऽरामशोभां व्यलोकयम् । तावदशोकवृक्षस्य तले निर्म्मलमानसः ॥ २२५० ॥
पद्मासनस्थितः कोऽपि मुनिर्ध्यानपरायणः । मया दृष्टः स्वनासाग्रदृष्टिः शान्तिमयः शुभः ॥ २२५१ ॥
वशीकृतेन्द्रियग्रामः सर्वसंकल्पवर्जितः । आत्मसंयमलीनात्मा भव्यकान्तिविराजितः ॥ २२५२ ॥
विनिर्यदुरुतेजसा शमितदुर्मनश्चेष्टितः, स्वजातिरिपुता त्यजद्वनचरैरलं वेष्टितः ।

प्रभावनिरुपद्रवः स्वसुखमत्र ईहां विना, स्वभावमधुरो मुनिर्वरदः एव मेधाविनाम् ॥ २२५३ ॥
मन उदयति नो चेत् क्व स्पृहाया विकाशः, भवति विषयभाजामिन्द्रियाणां विनाशः ।
स हि भवति महात्मा यत्र तत्राऽपि तिष्ठन्, स्वपरसुखविधाता निर्मनाः स स्वतन्त्रः ॥ २२५४ ॥
तत्र गत्वाऽहमानम्य नष्टसर्वकुवासनम् । तं मुनिं पूज्यभावेन विहिताञ्जलिरब्रवम् ॥ २२५५ ॥
रागद्वेषौ विभो ! जेतुं घनमोहजिगिषया । पापवृत्तिनिर्वृत्त्यर्थमिच्छामि शरणं तव ॥ २२५६ ॥
शिष्यं तदधुनैवाऽत्र शाधि मां च यथाविधि । जन्ममृत्युग्रहग्रस्तं भवाब्धिं तर्तुमुत्सुकम् ॥ २२५७ ॥
विषयविषवनाली दीप्तदुर्ज्वालया यो मधुमयमृदुमोहैर्बद्ध आदह्यते हा ! ।
भयविधुरितचेता मार्गयस्तत्र रक्षां, गुरुचरणमुपेतो धन्य धर्मं शृणोति " ॥ २२५८ ॥
मनःश्रोत्रसुधां वाचमवदत् सोऽनुकम्पया । यावज्जीवं मुनेर्धर्मभारोऽतिदुर्वहो नृणाम् ॥ २२५९ ॥
अंसयोरुह्यते भारो मस्तके च सुखं जनैः । धारणं धर्मभारस्य दुष्करं मन्यते बुधैः ॥ २२६० ॥
" धर्मस्य फलमिच्छन्ति धर्मं नेच्छन्ति मानवाः । फलं पापस्य नेच्छन्ति पापं कुर्वन्ति सादराः ॥ २२६१ ॥
मयोक्तं मुनिशार्दूल ! जनो निश्चिनुयाद् यदि । आनन्दशुद्धिलाभाय तर्हि किन्त्वस्य दुष्करम् ॥ २२६२ ॥
गृहस्थाश्रममुत्सृज्य मुनीनां नियमे मनः । कृतमस्ति यतस्तेन विना दुःखं न शाम्यति ॥ २२६३ ॥

ततो मे साधुना तेन जन्ममृत्युभयच्छिदा । आत्मोद्धारकरी दीक्षा प्रदत्ता मोक्षदायिनी ॥ २२६४ ॥

गतभवकृतभूयस्त्यागवैराग्यबीजात्, इह भवभवदुःखज्ञानसम्यक्प्रकाशात् ।
भवभविगुरुराजप्राप्तकारुण्यशिक्षा, उपशमगुणभाजां किं नियते न दीक्षा ॥ २२६५ ॥

वीतरागोदितः साधुधर्मः स निर्मलः स्मृतः । कामक्रोधारिमर्दनो पञ्चमहाव्रतात्मकः ॥ २२६६ ॥

श्रमणप्रतिबोधसंस्कृतान् स्थविराम्नायमुनिक्रियाविधीन् । गुरुराजमुखश्रुतानहं हृदये स्थापितवान् विवेकतः ॥ २२६७ ॥

ततस्तस्य रहस्यं सद्विनयः सुष्ठु भाषणम् । प्रतिक्रमणमाचारः प्रत्याख्यानादिकं तथा ॥ २२६८ ॥

यथाविधि कृपां कृत्वा गुरुणाहं सुशिक्षितः । ततो जैनागमाभ्यासो विहितः क्रमतो मया ॥ २२६९ ॥

प्रथमं तेषु षट्त्रिंशत् प्रथितान्युत्तराख्यया । ब्रह्मचर्यादि धर्माद्याऽध्ययनान्यपठं गुरोः ॥ २२७० ॥

अथाऽऽचाराङ्गसूत्राणां नवाप्यध्ययनानि वै । मुक्तिमार्गप्रबोधाय क्रमेणाऽपठिषं मुनेः ॥ २२७१ ॥

ततः सूत्रकृदाङ्गं च स्थानाङ्गसमवायकम् । शास्त्राण्येतान्यधीतानि सविधि स्थिरया मया ॥ २२७२ ॥

ततः कालिकसूत्राणि ग्रन्थाश्चाङ्गगता अपि । अधीताः पूर्वसिद्धान्ताः स्फुटमेकैकशो मया ॥ २२७३ ॥

नवपूर्वाः सुविस्तीर्णा लब्धा दृष्टिप्रकाशकाः । सापेक्षाश्च मिथो द्रव्यगुणमानविशेषकाः ॥ २२७४ ॥

तेनैतज्जगतस्तत्त्वं जनिस्थितिव्ययात्मकम् । विज्ञातं सकलं किं नो ज्ञायते ज्ञानतोऽत्र वै ॥ २२७५ ॥

इत्थं द्वादशवर्षाणि संसारमोहनाशने । व्यतीतानि समाज्ज्ञानामभ्यासकरणे तथा ॥ २२७६ ॥
सम्यग्ज्ञानयमाभ्यां हि कुर्वे यत्नमहर्निशम् । निःश्रेयसाय सोत्साहमर्हत्सन्दर्शितेऽध्वनि ॥ २२७७ ॥
भव्येभ्यो मानवेभ्योऽपि धर्मं सर्वार्थसिद्धिदम् । दिशन् श्रेष्ठतमं भूमौ पर्यटामि निरन्तरम् ॥ २२७८ ॥

" संसारत्याग–आत्मसाधना च " ॥

खेदोत्पत्तिकरोऽस्माभिर्वृत्तान्तोऽयं यदा श्रुतः । पूर्वं सोढं तदा दुःखं कृत्स्नं नवमजायत ॥ २२७९ ॥
तदानीं साऽश्रुनेत्राभ्यां वीक्षितं च परस्परम् । अमृतो वविपेवेति साधुः साश्चर्यमीक्षितः ॥ २२८० ॥
पापीयानप्ययं पूर्वं व्रतेन क्षीणकल्मषः । तस्माद्दुःखप्रहाणाय नूनं कार्यं तपोऽधुना ॥ २२८१ ॥
अनुभूतानि दुःखानि चाऽस्माकं स्मृतिमाययुः । स्नेहक्रीडाविलासेषु विरागोऽभूद् यथा विषे ॥ २२८२ ॥
सम्यक्क्रियाविधानेन पवित्रचेतसो मुनेः । तस्य पादम्बुजद्वन्द्वे सद्भक्त्या पतिता वयम् ॥ २२८३ ॥
पुनरुत्थाय संयोज्य हस्तौ भालस्थले ततः । प्राणत्राणकरः पूर्वमथो मित्रं न्यगादि सः ॥ २२८४ ॥
यच्चक्रवाकयोर्युग्ममुद्धृतं स्तेनकन्दरात् । त्वया मानुष्यके धीमँस्तदावां स्वयमेव हि ॥ २२८५ ॥
यथा समर्पिताः प्राणास्तथैव दुःखतोऽधुना । मोक्षदोऽपि भवाऽस्माकं त्वमेव शरणार्थिनाम् ॥ २२८६ ॥
मृत्युदुःखं च यत्राऽहर्निशमावर्तते मुहुः । संबन्धशृङ्खलारूपो भवोऽस्माँस्तापयत्यलम् ॥ २२८७ ॥

मुमुक्षा वर्ततेऽस्माकं सर्वथा भवतारिणी । तीर्थकृद्दर्शितं मार्गमावां नय दयामय ! ॥ २२८८ ॥
साधुत्वे निरवद्यं च शासनं यदनेकधा । आवयोः शम्बलं भूयाद्यात्रार्थं व्रजतोर्हि तत् ॥ २२८९ ॥
संयमी सोऽवदच्छान्तो यो धर्मं कुरुतेऽनिशम् । सोऽवश्यं सर्वदुःखेभ्यो मुच्यते नैव संशयः ॥ २२९० ॥
पुनर्जन्मादि दुःखानि भवाब्धौ विविधानि चेत् । पीडयन्ति सदा युष्माँस्तर्हि स्वार्थे विमुच्यत ॥ २२९१ ॥
मोक्षदां च तपश्चर्यां समाचरत संततम् । व्रतादेव नरा लोकद्वये सिद्धिं भजन्ति हि ॥ २२९२ ॥
जानात्येव जनश्चैतन्मृत्युर्वै प्राणिनां ध्रुवम् । कदाऽऽगमिष्यतीत्येवं नैव वेत्ति विमूढधीः ॥ २२९३ ॥
तस्माद्यावत् स नायाति तावद्धर्मं समाचरेत् । गर्जत्यस्मिन् समायाते तपश्चर्या न सिद्ध्यति ॥ २२९४ ॥
यावत्स्वास्थ्यं शरीरस्य यावच्चेन्द्रियपाटवम् । तावद्देही विमुक्त्यर्थमुद्योगं कर्तुमीश्वरः ॥ २२९५ ॥
जीवितं चञ्चलं लोके नैकविघ्नभृतं च तत् । तद्विश्वासो न कर्तव्यो धर्मः कार्योऽविलम्बतः ॥ २२९६ ॥
न दुःखं न च मृत्युश्चेत् धर्मोपेक्षा तदा वरम् । मृत्युप्राप्तिरवश्यं चेत् तदाऽऽलस्यं क्षतिप्रदम् ॥ २२९७ ॥
तस्मात्स्वस्थं शरीरं स्याच्छक्तिश्चास्खलिता भवेत् । तावदात्मोद्धृतेः कार्यं विधातव्यं मनीषिभिः ॥ २२९८ ॥
तेनैव जन्मसाफल्यं जायते हि शरीरिणाम् । धर्महीना महीपृष्ठे चरन्ति पशुसन्निभाः ॥ २२९९ ॥
निशम्येति मुनेर्वाचः संसारक्षोभकारकः । जातोऽस्माकं पवित्रं च जीवनं कर्तुमुद्यतो ॥ २३०० ॥

तस्मात्त्राऽस्मदीयानि भूषणानि निजाङ्गतः । समुत्तार्य प्रदत्तानि दासीभ्योऽस्माभिरस्पृहैः ॥ २३०१ ॥
ताश्चैवं गदिताः पश्चाद् गत्वाऽस्मत्पितृसन्निधौ । अलङ्कारानिमान् दत्त्वा कथनीयमिदं वचः ॥ २३०२ ॥
तावुभौ जगतो दुःखान्मुहुश्च जन्ममृत्युतः । समुद्विग्नतरौ जातौ मोक्षशर्मपरायणौ ॥ २३०३ ॥
असारं खलु संसारं विदित्वाऽऽत्मसुखप्रियौ । तस्माद्दुःखस्य हर्तारं धर्माऽध्वानं समाश्रितौ ॥ २३०४ ॥
अज्ञानाद्वा प्रमादाद्वाऽसदाचरणतस्तथा । यूयं विराधितास्तर्हि क्षन्तव्यं कृपयैव तत् ॥ २३०५ ॥
उदन्ते प्रसृते तस्मिन् दास्यो नद्यश्च विस्मिताः । धावन्त्योऽरं समागत्य प्रणेमुर्मत्पतिक्रमौ ॥ २३०६ ॥
प्रार्थयामासुरेनं च माऽस्मान् मारय संश्रितान् । काश्चिदादाय पुष्पाणि चरणस्पर्शकाम्यया ॥ २३०७ ॥
मत्पत्युः पादयो. प्रेम्णा व्याकिरन् मूढचेतसः । ज्ञात्वैवाऽपातयन् हस्तात् साश्रुनेत्रास्ततोऽवदन् ॥ २३०८ ॥
प्रमोदाज्जीवनं स्वीयं वहन्त्यो गुप्तकामनाः । भवदालिङ्गनाज्ञातो जीवामः सुखतो वयम् ॥ २३०९ ॥
अस्माकमधुना वाञ्छा मूलच्छिन्ना तथाऽपि नो । त्वदीयदर्शनेनैव मनःसन्तोषमेष्यति ॥ २३१० ॥
सितपद्मनिभश्चन्द्रो यदि नो स्पृश्यते जनैः । शुद्धं तथापि तद्बिम्बं दृष्ट्वा कोऽत्र न मोदते ? ॥ २३११ ॥
तस्मादत्रैव तिष्ठ त्वं समाधिं स्वे गृहे कुरु । इत्युदीर्य रुदन्त्यस्ता बहुधा तं न्यवारयत् ॥ २३१२ ॥
अनावृत्यैव मत्स्वामी तत्सर्वं बन्धकारकम् । अस्पृष्टो विमुखीभूय बभूव मुनिसंमुखः ॥ २३१३ ॥

संसाराद्विरतीभूय साधुजीवनवाञ्छया । स्वयमेतेन सर्वेऽपि केशा मोदेन लुञ्चिताः ॥ २३१४ ॥
मयाऽपि मामकाः सर्वे केशा निर्मुञ्चिताः क्षणात् । ततोऽहं स्वामिना साकं प्राणमं चरणौ मुनेः ॥ २३१५ ॥
प्रार्थना च ततोऽकारि गुरो ! दुःखाद् विमोचय । उदारमानसा सन्तो भवन्ति हितकाङ्क्षिणः ॥ २३१६ ॥
अथोवाच मुनिस्तत्र सम्यक्त्वादिस्वरूपकम् । भावशुद्धिकरं सद्यस्तत्त्वबोधमनुत्तरम् ॥ २३१७ ॥
यो देवत्वं मन्यते देवदेवे, यो धर्मत्वं मन्यते शुद्धधर्मे । यो जानीते सद्गुरौ वै गुरुत्वं, सम्यक्त्वैतत् कीर्त्यते बुद्धिमद्भिः॥२३१८॥
एतस्माद् विपरीतं यो मन्यते मूढमानसः । स मिथ्यात्वमतिर्ज्ञेयोऽनन्तसंसारवेदकः ॥ २३१९ ॥
सामायिकं व्रतं पूर्वं छेदोपस्थापनं ततः । परिहारविशुद्ध्याख्यं तृतीयं सम्प्रकीर्तितम् ॥ २३२० ॥
स्यात्सूक्ष्मसंपरायं च यथाख्यातं च पञ्चमम् । पञ्चैतान्येव मोक्षाय चारित्राणि विदुर्बुधाः ॥ २३२१ ॥
अणुव्रतानि पञ्चैव त्रीणि गुणव्रतानि च । शिक्षाव्रतानि चत्वारि क्रमतो मुक्तिदानि वै ॥ २३२२ ॥
महाव्रतानां पञ्चानां यो भारं वोढुमक्षमः । व्रतानि सर्वदा तस्य द्वादश सिद्धिदानि हि ॥ २३२३ ॥
महाव्रतं महावीराः स्वीकुर्वन्ति नरोत्तमाः । श्रुतमात्रा अधिरास्तु नश्यन्ति क्रोष्टुवत् ततः ॥ २३२४ ॥
महाव्रती धीरमनाः प्रतीयते, सामायिकस्थश्रुतधर्मदेशकः । भिक्षैकजीवी सुखदुःखयोः समो भवेद्धि जैनव्रतदीक्षितो मुनिः ॥
" धर्मज्ञो धर्मकर्त्ता च सदा धर्मपरायणः । सत्त्वेभ्यो धर्मशास्त्रार्थदेशको गुरुरुच्यते ॥ २३२६ ॥

महाव्रतधरा धीरा भैक्षमात्रोपजीविनः । सामायिकस्याः धर्मोपदेशका गुरवो मताः ॥ २३२७ ॥
द्रव्यचारित्रमस्त्येव भावचारित्रकारणम् । भावचारित्रतो मोक्षं भव्यात्मा लभते ध्रुवम् ॥ १ ॥
संसारसागरोत्तारे चारित्रं तरणीयते । मुनयः संवदन्त्येवं सर्वतत्त्वार्थवेदिनः ॥ २ ॥
" चारित्ररत्नान्न परं हि रत्नं तदर्थमेव प्रकरोतु यत्नम् । चारित्रलाभान्न परो हि लाभः स्वश्रेयसी यस्य फलेति लाभः ॥ ३ ॥
ततस्तेन पुनः प्रोक्तं व्रतं सामायिकाऽभिधम् । गृहीतं च तदावाभ्यां व्रतिनां शुभकारकम् ॥ ४ ॥
" मोक्षस्य सामायिकमङ्गमस्ति, श्रेष्ठं च तच्छ्री जिनभाषितत्वात् । वास्यां तथा चन्दन एकभावाः, सामायिकस्येष्टफलं लभन्ते॥
समानता यत्र च भूतमात्रे सत्संयमः स्याच्छुभभावना च । रौद्रार्तहानं शुचिधर्मशुक्लध्यानं च सामायिकमाहुरार्याः ॥ ६ ॥
अनुष्ठितो यत्र समग्रकर्म—त्यागस्तथैवाऽशुभभावरोधः । मुहूर्तमात्रं समताऽपि तां वै सामायिकं शास्त्रकृतो वदन्ति ॥ ७ ॥
ये गमिष्यन्ति गच्छन्ति गता वा मोक्षमन्दिरम् । ते सामायिकमहात्म्यादेवेति च विजानत ॥ ८ ॥
द्विधा चतुर्धा पुनरष्टधा च, विशेषतस्तद्गुणसंगतस्तत् । सामायिकाराधनतस्तथाऽऽत्मा भवत्यकर्मेति सतां विचारः ॥ ९ ॥"
" कुर्वेहं भगवन् ! समस्तविरतिं ' सामायिकं ' ते पुरः, प्रत्याख्यामि समस्तजीवनमहं सावद्ययोगं तथा ।
चेतो वाक्तनुभिर्न चैव विदधे नो कारये वा परैः, कुर्वन्तं त्वनुमोदये न भगवन् ! तच्च त्रिधाऽपि त्रिधा ॥ १० ॥
तत्सर्वं च प्रतिक्रमामि भगवन् ! निन्दामि गर्हामि च, एवं नम्रगिरा च भाषततया वक्तव्यमग्रे गुरोः ।

तत्सर्वं व्रतमुख्यमस्ति गदितं ' सामायिकाख्यं ' व्रतं, तस्माद्धे भविकाः ! समाचरत तद्द येन स्वमुक्तिर्ध्रुवा " ॥ ११ ॥
प्रतिज्ञा चेदृशी तत्र स्वीकर्त्तव्याऽस्ति साधुभिः । पुण्यात्मन् ! पालयिष्यामि सर्वथा विरतिक्रमम् ॥ १२ ॥
यावज्जीवं व्रतस्थोऽहं सदा त्यक्ष्याम्यसत्क्रियाः । धर्मशास्त्रे निषिद्धा यास्ताः सर्वाः सर्वथा जने ॥ १३ ॥
मनोवाक्कायतः क्वापि न करिष्ये स्वयं सदा । असत्कर्माणि नो चान्यैः कारयिष्ये कदाप्यहम् ॥ १४ ॥
कुर्वन्तं नानुमंस्ये च कर्माण्येतानि सुस्थिति । एतादृक्सर्वकर्मभ्यो दूरं स्थास्यामि सद्गुरो ! " ॥ १५ ॥
इदं व्रतमृजुत्वेन पाल्यते चेद् यथाविधि । तदा मोक्षसुखं मर्त्यैः प्राप्यते सुखतः किल ॥ १६ ॥
गृहीतेऽस्मिन् व्रते हिंसा-मृषास्तेयरतानि च । परिग्रहो निशाऽऽहारश्चैतेभ्यो विरमाम्यहम् ॥ १७ ॥
भवपाथोधिखिन्नाभ्यामावाभ्यां च मुमुक्षया । एतद्व्रतप्रतिज्ञैवं यावज्जीवं च जगृहे ॥ १८ ॥
देहजीवनमृत्यूनां स्वार्थत्यागप्रदर्शकाः । उत्तरगुणकाश्चाङ्गीकृताः स्वात्मविशुद्धये ॥ १९ ॥
समितयस्तपःपिण्डविशुद्धिभावना अपि । प्रतिमाऽभिग्रहश्चैते ह्युत्तरगुणकाः स्मृताः ॥ २० ॥
महाव्रतानां पञ्चानां प्रत्येकं पञ्चभावनाः । विज्ञापिता मुनीन्द्रेण सम्यक् तत्त्वार्थनिश्चयात् ॥ २१ ॥
पुनः पुनस्तदर्थस्य चेतसि स्वे विचारणात् । चारित्रं निर्मलं कर्ममालिन्यक्षालनं भवेत् ॥ २२ ॥
किङ्कर्यस्ततः श्रुत्वा वृत्तान्तमिदमञ्जसा । आवयोः पितरौ तत्र द्रष्टुकामौ समागतौ ॥ २३ ॥

अस्मद्दीक्षाप्रसङ्गेन बाला वृद्धास्तथा स्त्रियः । सख्यः सवयसाऽभिन्नचेतसः स्नेहकातराः ॥ २४ ॥
उत्कचित्ताः प्रमोदाढ्याः सद्यस्तत्र समागमन् । एवं सम्बन्धिभिः सर्वैर्बहुजिज्ञासुभिस्तथा ॥ २५ ॥
विशालोऽप्येष आरामः संकीर्णोऽभूत् क्षणान्तरात् । संघट्टेन भृशं तेषामपीड्यन्त वपूंष्यपि ॥ २६ ॥
मुखमूर्ध्वमयं चैतदुद्यानं समदृश्यत । व्रतानुरोधतस्त्यक्तभूषणौ नौ विलोक्य च ॥ २७ ॥
अस्मत्सम्बन्धिनः सर्वे व्यलपन्मुक्तकण्ठतः । पितरस्तु निरीक्ष्यैतत्सद्य एवाऽरुदन् भृशम् ॥ २८ ॥
तारस्वरैरतिस्नेहाद् वत्सला निजबालयोः । मदीयश्वशुरौ तूर्णं हि जानन्तौ गुरुसंगतः ॥ २९ ॥
गर्भद्वारप्रवेशः पवनविषमता स्रावसंकीर्णभावः, स्रोत्पत्तौ स्पर्शतैक्ष्ण्यं विरसरसनता निःसहायप्रवृत्तिः ।
नानादुर्भावयोगो वयसि विषमता व्याधिदारिद्र्यपीडा, आशाभङ्गो जरायामनुचितमरणं संसृतौ किं सुखं तत् ॥ ३० ॥
तौ तस्माच्छोकवेगं स्वं, निरुध्य मां समूचतुः । निवारणाय मोहेन न तूपालम्भहेतवे ॥ ३१ ॥
पुत्रि ! बाल्ये त्वयेदं किं साहसं विहितं हहा ! । कोमलाङ्ग्या कथं साधुचारित्रं पालयिष्यते ! ॥ ३२ ॥
बुद्ध्या स्वाऽस्थैर्यतः पापमिदानीं नो भवेद्यथा । एतस्मिन् जीवने कष्टसाध्ये सिद्धिविधानके ॥ ३३ ॥
जीविताऽऽनन्दसौख्यानि भुक्त्वा भोग्यानि बालिके ! । साधूनां चरितं पश्चात् त्वया ग्राह्यं सुखेन वै ॥ ३४ ॥
ततोऽहमवदं तात ! गेहिसौख्यं हिताय नो । क्षणिकं विद्यते पश्चात् कटुकं च विजायते ॥ ३५ ॥

सम्पर्कमात्रसुरसा हृदयंगमश्च, नेत्रादितोषणपरा परिणामदुःखाः । विद्वज्जनैरतितरां ग्रहणे निषिद्धा दुर्भाग्यतस्तदिह मूढजनाः पतन्ति ॥

क्रोधाविला नियममात्रविरुद्धचित्ताः, मोहेन तद्ग्रहणलालसया परीताः ।
गच्छन्ति केऽपि नरकं रुजया हि मृत्वा, पश्चाच्च ते विकलतां परमां लभन्ते ॥ ३७ ॥

दुर्गन्धिदूषिततनुव्यथितस्वलोका आलोकना विकलभीष्मकुनेत्रचेष्टाः ।
वाग्व्याकुलाः खरतरत्वचयाऽतिनिन्द्या, हाहा ! अधर्मदलिता न सुखं लभन्ते ॥ ३८ ॥

मन्दाऽतिमूढमतयो गतिहीनपादाः, स्वस्वानुकूलधनधान्यविवर्जिताश्च ।
आस्यादिरोगगतभोगविषण्णचित्ता भाग्यात् कदापि दधते भुवि धर्मसंगम् ॥ ३९ ॥

धर्माय वाञ्छा यदि वः प्रकामममुराधवाञ्छां कुरुत स्वचित्ते । मुनेः प्रसादः प्रथमोऽस्त्युपायः स एव पुण्येन ददाति धर्मम् ॥४०॥

सोढव्यौ बन्धुवर्गस्य रागद्वेषावनेकधा । निर्वाणेन समं तस्मान्नान्यदस्ति सुखावहम् ( साधनम् ) ॥ ४१ ॥

सर्वथा मानवैर्धर्ममार्गः सेव्यः प्रयत्नतः । स एव मोक्षदो नित्यं भव्यानां मोक्षकाङ्क्षिणाम् ॥ ४२ ॥

यावन्नो मृत्युरायाति तावद् धर्मो मनीषिभिः । समुपार्ज्यः समस्तार्थजनको हितकाम्यया । ॥ ४३ ॥ युग्मम्

मत्पिता मां पुनः प्राह संसारोऽतिभयंकरः । दुःसाध्योऽस्ति ततः पाल्यो जैनधर्मः प्रयत्नतः ॥ ४४ ॥

जालेषु स्युः यथा स्तेनास्तथेन्द्रियाणि यौवने । तथापि भवपाथोधिं तरतं निर्भयं युवाम् ॥ ४५ ॥

योग्ययोर्योग्यसंयोगो महामोदविधायकः । ततः सम्बन्धिभिः कलत्रैरुपचारैः सचेतनौ ॥ ४६ ॥

श्रुत्वा मच्छ्वशुरौ सद्यः प्रोचतुः स्वामिनं मम । पुत्रेदं शिक्षितं केन नाऽस्मत्संगोऽस्ति किं प्रियः ? ॥ ४७ ॥

किं च ते पतितं दुःखं येन त्वं साधुतां गतः । वत्सलां मातरं मां च प्रिया च त्यक्तुमुद्यतः ॥ ४८ ॥

केवलाध्यात्मिका नैव धर्मकर्मरता अपि । संसारवासिनो धर्माल्लभन्ते स्वर्गसम्पदः ॥ ४९ ॥

संसारिणः पुरा भव्या भव्यकर्मविधायकाः । बहवः सिद्धिसम्पन्नाः श्रूयन्ते जैनशासने ॥ ५० ॥

संसारे रमणीरत्नमिति लोके निगद्यते । अप्सरोभिः समानाश्च वर्तन्ते ता गृहे तव ॥ ५१ ॥

संसारे भोगतृप्तिस्ते, ' यदा स्याद्विरतेस्तदा ' । सेव्यः पन्थाः प्रसन्नेन त्वया निःश्रेयसार्थिना ॥ ५२ ॥

प्रभूतां धनसम्पत्तिं रम्यां श्रेष्ठिसुतामिमाम् । अस्मानपि परित्यज्य गन्तुं शक्तः कथं सुत ! ॥ ५३ ॥

इदानीमपि वर्षाणि कानिचिद्वै गृहाश्रमे । स्थित्वा भोगविलासानामानन्दं भुङ्क्ष्व शोभन ! ॥ ५४ ॥

पश्चात्तीव्रव्रतावस्थामवाप्यत् सुखतोऽङ्गज ! । मौनं व्रतं प्रपद्येथा नाऽयं कालो व्रतस्य ते ॥ ५५ ॥

“ श्रेष्ठिसूनुर्दृढस्वान्तो दृष्टान्तैर्विविधैर्निजम् । पितरं विलपन्तं तं प्रत्युवाचेति युक्तितः ” ॥ ५६ ॥

“ कोशकीटो यथा मुग्धः स्वोपभोगाय निर्मिते । व्याकुलः सन्निजे कोषे म्रियते स्वयमेव हि ॥ ५७ ॥

तथैवाऽज्ञानतो मूढः पुरुषो भोगतृष्णया । रमणी मोहितोऽनेकदुःखानि लभतेऽवशः ॥ ५८ ॥

रक्तस्तडिच्चले रूपे विषयकण्टकाऽऽवृते । दुस्तरे भवकान्तारपथे भ्राम्यति मूढवत् ॥ ५९ ॥
स्त्रीवियोगाद् यथा दुःखं जायते देहिनस्तथा । तत्संयोगेऽपि शं नैव जायते मुग्धचेतसः ॥ ६० ॥

भवे योगतः प्राप्तसंगोत्थदुःखोविरामे स्पृहावान् स्वलोकैर्निबद्धः ।
महादुःखमध्येऽपि सौख्याऽऽशयाऽसौ, भवे दून दूनो न संयोग इष्टः ॥ ६१ ॥

धनान्यपि मनुष्याणां केवलं दुःखदानि हि । अर्जने रक्षणे दुःखं नाशोऽपि दुःखमेव च ॥ ६२ ॥
धनं भवति दुर्लभं तदपि नाशवद् वर्तते, करोति धनिनां धनं निधनमेव चोरादिभिः ।
ततोऽपि वरमद्भुतं स्वजनयाश्च संशेरते, धनी भवति मोहतोऽहिमनगो धनं गर्हितम् ॥ ६३ ॥
माता पिता तथा भ्राता भार्याऽपत्यानि किङ्कराः । सम्बन्धिनश्च सर्वेऽपि रोधका मोक्षवर्त्मनि ॥ ६४ ॥
यात्रायां मीलिता लोका यथेच्छन्ति सहस्थितिम् । प्रवासदुःखभाजश्च व्रजन्ति सममेव वै ॥ ६५ ॥
भये तु ते पृथग्भूय कान्दिशीकाः प्रयान्ति हि । तथा सम्बन्धिनः सर्वे भवेऽस्मिन् स्नेहबन्धनात् ॥ ६६ ॥
सुखदुःखोपभोगाय मिथः साहाय्यहेतवे । मिलित्वाऽपि वियुज्यन्ते देहस्यान्ते बहिर्गताः ॥ ६७ ॥

व्यसनमुपगता ये दूरमस्मात् प्रयातुं, स्वमिव परजनं ते शोधयन्ति प्रयासात् ।
मिलितशुचिसहाया मोदमाना भवन्ति, भवति हि गुणिसंगोऽल्पोऽपि भूमाऽत्र लोके ॥ ६८ ॥

निर्वाणं न विना तेन प्राप्यते केनचित्खलु । निश्चित्यैवं सदा शीघ्रं सुधीर्मृत्युसमाक्रमात्
प्रागेव विजिताक्षः सन् ज्ञातसारो विवेकतः । कर्त्तव्यं साधयेत्कार्यं निर्वाणाऽध्वप्रदीपकम् ॥ ६९ ॥
विवेकनेत्रयुक्तेन मोक्षमार्गं यियासुना । सुखाय सर्वथा हेयो दुष्टसंगोऽतिदुःखदः ॥ ७० ॥
यदि भवति विवेको मुक्तिमार्गोपकर्ता, किमिह गमनभङ्गः दुष्टसंङ्गो विधाता ॥ ७१ ॥
इति मनसि न धार्यं दुष्टसंगे विवेको–विलयमयति तस्माद्दुष्टसंगो हि हेयः ॥ ७२ ॥
" कियद्वर्षाणि तिष्ठ त्वं " जीवितानन्दवाञ्छया " । इति ते वचनं " मोहग्रस्तं " मे भाति केवलम् ॥ ७३ ॥
" स्वार्थो यः परमार्थ इत्यभिधया शास्त्रेषु संश्रूयते, तत्सम्यक् परिबोधनाय समयं दत्ते न यो दुस्त्यजः । ॥ ७४ ॥
संसारद्रुममूलमस्ति विषया–पत्राणि दुःखं फलं, तन्मोहान्धकृति–र्यया न यतते धर्माय कश्चित्पुमान् " ॥ ७५ ॥
" मिथ्यात्वाऽसंयतानां निरनुभववतां स्वेतरे स्वत्वबुद्धिः, सौख्यभ्रान्तिस्वभावो भवति जगति यः सैव मोहः सदुक्तः ।
लोकोद्भूते सुखे यत्सुखमिति मनुतेऽन्तश्च मिथ्यात्वमस्ति, यन्मे मे सर्वमेतद्वदति स महिमा मोहराजस्य मन्ये " ॥ ७६ ॥
यतः संसारवासोऽयमनित्यः प्राणिनां खलु । जीवनं स्वं कियच्चेति निर्णेतु नैव शक्यते ॥ ७७ ॥
संसारवासः किल दुःखमिश्रः सुखं तु तस्मिन् क्वचिदेव किंचित् ।
नित्यः स चेद्द् हन्त सुदुःखितानां श्रमापनोदो न कदापि भावी " ॥ ७८ ॥
यतः–" दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे गर्भवासे नराणां, बालत्वे चापि दुःखं मलमलिनतनुः स्त्रीपयःपानमिश्रम् ।

तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्यसारः, संसारे रे ! मनुष्या ? वदत यदि सुखं स्वल्पमप्यस्ति किंचित्" ॥ ७९ ॥
मृत्योर्वारयितुं कोऽपि शक्नोत्याज्ञां न मानवः । तस्माद्यावत्स नायाति तावद् ग्राह्यं व्रतोत्तमम् ॥ ८० ॥
स्वकर्मपाकेन परिस्थितिश्चेत् विवर्तते साधनसंश्रितानाम् । न जातु मुक्तेरभिलाषयाऽस्यां, त्यजन्ति हृत्स्वीकृतसाधनं वै ॥
आत्माऽस्ति नित्यः कुरुते प्रयासं पतेत्कदाचिद्धिजर्वं शरीरम् । अन्यत्र जन्मन्यपि तत्नपत्स्येत् स्यान्मूर्खताङ्गीकृतमोचनेन" ॥
एवमादि वचोवृन्दैः पितरौ बान्धवाँस्तथा । पश्चाद्वालयितुं श्रेष्ठिसूनुः स समबोधयत् ॥ ८३ ॥
बालमित्राणि येऽप्यासन् स्नेहपाशवशंगताः । तेऽपि विज्ञापितास्तेन गमनाय स्वसद्मनि ॥ ८४ ॥
पुत्रे चातिममत्वेन श्रेष्ठिने नारुचद्गमः । व्रतवैमुख्यवार्ता च तदुक्ता नो च नाऽरुचत् ॥ ८५ ॥
यतः साधुव्रतेच्छा नो पालने सुदृढाऽभवत् । तेन पार्श्वस्थिता लोकाः कथयामासुरीदृशम् ॥ ८६ ॥
निजेच्छासदृशं चैतौ साधयेतां निजात्मनः । कस्याणं जन्ममृत्युभ्यां पीड्यते वस्तुतो यतः ॥ ८७ ॥
" संसारविमुखं यश्च तपश्चरणसम्मुखम् । निवारयेत्सम् नो मित्रं शत्रुरेवाऽभिधीयते ॥ ८८ ॥
प्रकृतिरिहनिवस्तुं प्रेरयेत्येव नित्यं, कृतमिह तु हितं किं यत्तथैव प्रयोक्त्रा ।
भवजलनिधिकूलाद्दुःखमूलादपेतुं कथयति सहमित्रं शत्रवः सन्ति चाऽन्ये " ॥ ८९ ॥
इति लोकोपदेशेन स्वीकृताऽसद् गिराबलात् । ' श्रेष्ठिनाऽनिच्छताप्याऽऽज्ञा दत्ता चारित्रकर्मणि ' ॥ ९० ॥

ततः स प्राह " भो ! पुत्रौ ! युवां संयमपालने । तपोविधौ तथा तीव्रदुःखपारमवाप्नुताम् " ॥ ९१ ॥

" तीव्रस्य दुःखस्य तु पारमेतुं स्वसंयमो वा तप आदरो वा। कृत्वा द्वयं सीदति नैव कश्चित्सतां स मान्यः प्रथमो विपश्चित् " ॥

यथा " यत्पूर्वार्जितकर्मशैलकुलिशं यत्कामदावानल–ज्वालाजालजलं यदुग्रकरणग्रामाऽहिमन्त्राक्षरम् ।
यत्प्रत्यूहतमः समूहदिवसं यल्लब्धिलक्ष्मीलता–मूलं तद्द्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः " ॥ ९३ ॥

" यस्माद्विघ्नपरंपरा विघटते दास्यं सुराः कुर्वते, कामः साम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति ।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यः कर्मणां, स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम् ? ॥ ९४ ॥

सन्तोषः स्थूलमूलः प्रशमपरिकरः स्कन्धबन्धप्रपञ्चः, पञ्चाक्षीरोधशाखःस्फुरदभयदलः शीलसम्पत्प्रवालः ।
श्रद्धाम्भः पूरसेकाद्विपुलकुलबलैश्वर्यसौन्दर्यभोगः, स्वर्गादिप्राप्तिपुष्पः शिवपदफलदः स्यात्तपः कल्पवृक्षः " ॥ ९५ ॥

" न नीचैर्जन्म स्यात् प्रभवति न रोगव्यतिकरो, नवाप्यज्ञानत्वं विलसति न दारिद्र्यललितम् ।
पराभूतिर्न स्यात्किमपि न दुरापं किल यत–स्वदेवेष्टप्राप्तौ कुरुत निजशक्त्यापि सुतपः ॥ ९६ ॥

यथेष्टानां पारं भवति नहि लोके जनिमतां, तथा नानाऽऽकारं प्रभवति तपो भिन्नकरणात् ।
न यत्प्राप्तौ किंचित् सुलभमिह संसाधनमहो, तदेवेष्टप्राप्तौ कुरुत निजशक्त्याऽपि सुतपः ॥ ९७ ॥

जंतूनां तपसा नूनं, जायन्ते सर्वसम्पदः । निःश्रेयसपदं चैव सत्तपः सर्वकामदम् " ॥ ९८ ॥

क्षणसुखभवाम्भोधेर्जन्ममृत्युतरङ्गतः । नानायोनिजलावर्तात्कर्माष्टमलिनादपि ॥ ९९ ॥
अभीष्टविरहाऽनिष्टसंगमकरणव्रजात् । सुदूरं तिष्ठतं मोहं सन्त्यज्य मुनिचर्यया ॥ १०० ॥
तपसि यद्यपि कष्टमहोऽधिकं भवति किन्तु तदुत्तमसाधनम् । सुरवशीकरणं त्रिविधेष्टदं सपदि केवलबोधविधायि च ॥१०१॥
उपकृतिकुशलानां या सदैव प्रधाना जगति जनिमतां तत्तद्धिते सावधाना ।
प्रणयविनयमूलं सर्वथा संदधाना, बहुगुणमुनिचर्या कस्य लोके प्रिया न ? ॥ १०२ ॥
' इदृशैः श्रेष्ठिनो वाक्यैर्दीक्षासम्मतिदायकैः । उत्साहं धारयामास द्विगुणं नौ मनस्तदा ' ॥ १०३ ॥
प्रभवति यदकस्मादन्तरायः कदाचित्, हृदयमति दुनोति प्रायसस्तद्धताशम् ।
कथमपि शुभदैवाल्लभ्यते सम्मतिश्चेत्, द्विगुणितवरश्रद्धोत्साह आयाति चित्ते ॥ १०४ ॥
" मत्पिताऽधाऽवदन्न्यो युवां यत् दुष्करं व्रतम् " । गृहीत्वा निर्वृत्तेर्मार्गे प्रयातौ प्रीतिपूर्वकम् ॥ १०५ ॥
बहुगतभवपुण्यस्योदयाद्भाग्यभाजां, भवति मनसि कश्चित् पूर्णवैराग्यभावः ।
सुखपरिकरसंगेऽपि प्रधूय प्रमोहं, दृढतरविरलाः केप्येव गृह्णन्ति दीक्षाम् ॥ १०६ ॥
क्लेशाऽऽगारं गृहस्थानां विहाय जीवनं मुदा, क्षणाज्जातौ विरक्तौ च प्रेमबन्धपरांमुखौ । ॥ १०७ ॥
सुखदुःखसमानत्वं बोधयन्ति विवेकतः, । युवाभ्यां धर्मतत्त्वानि मोहघ्नानि वृतानि वै ॥ १०८ ॥

संच्छिद्य कामजालानि स्नेहपाशं विधूय च । मानक्रोधौ समुत्सार्य धर्मं धन्यः प्रपद्यते ॥ १०९ ॥

अनादिकालोद्भववासनाभिः ज्ञातुं न कश्चिद् यतते सुखानि । जित्वाऽऽन्तरान् यः कुरुते स्वधर्मं, स एव धन्यः सुधियां वरेण्यः ॥

" वयं त्वद्यापि लोभेन भोगेष्वानन्दमानिनः । मोहं समाश्रिताः शक्ता नोऽभवन्मार्गमाश्रितुम् " ॥ १११ ॥

श्रेष्ठिनैवं तदा साधु-व्रतयोर्यनेकधा । विवेचनं कृतं भूरि तत्त्वार्थपारदृश्वना ॥ ११२ ॥

पक्षद्वयस्य नार्यस्तु रुदन्ति स्म शुचा भृशम् । व्यलपन् रुद्धकण्ठाश्चाऽस्मत्स्नेहसन्नियंत्रिताः ॥ ११३ ॥

मेघेनेव च सिक्ताऽभूदुद्यानभूमिकाऽखिला । तासामश्रुनिपातेन स्नेहबन्धनमीदृशम् ॥ ११४ ॥

स्नेहेन लोकः स्वहितं न वेत्ति निरन्तरं मज्जति मोहपङ्के । आश्चर्यमेकं च महत्तदत्र करोति नैवोद्धरणाय यत्नम् ॥ ११५ ॥

ततोऽस्मत्पितरो नार्यश्चान्ये सम्बन्धिनोऽपि च । मित्राणि दासवर्गश्च रुदन्तो नगरं ययुः ॥ ११६ ॥

गच्छन्तोऽपि मुखं पश्चाद्वालयित्वा मुहुर्मुहुः । व्यलोकयन् समाकृष्यमाणाः नः प्रेमरश्मिभिः ॥ ११७ ॥

हृदयमिदमपूर्वं जायते रागरक्तं, तदितरपरिबोधे शून्यतामादधाति ।

मुनिमपि बलदेवं वीक्षमाणाऽन्धरागा निजनवशिशुकण्ठे काऽपि रज्जुं बबन्ध ॥ ११८ ॥

संसारत्यागतोऽस्माकं चकिता श्रद्धया युताः । एते सर्वे जना भव्या प्रयान्ति स्म यथागतम् ॥ ११९ ॥

अथैका व्रतिनी तत्र श्रमणश्रीसमाश्रिता । गणिनी सद्गुणाढ्या च प्रभावप्लावनक्षमा ॥ १२० ॥

जिनोपदिष्टधर्मस्य साध्वीनां च सदैव हि । रक्षाविधायिनी ज्ञाने तपःसु च प्रसिद्धिभाक् ॥ १२१ ॥
विख्यातायाश्चन्दनाया: साध्व्या वीरस्य शासने । शिष्या साऽभून्महाप्राज्ञा जैनतत्त्वविचक्षणा ॥ १२२ ॥
भक्तिभावा ततो नत्वा धर्मिष्ठं तं मुनिं तया । तत्सार्थो वन्दितः पश्चाद्विधिवद्धर्मबोधकः ॥ १२३ ॥
सदसद्व्यक्तिनिष्णातो मुनिस्तां समचीकथत् । विरक्तां त्वमिमां साध्वीं निजशिष्यां विधेहि भो ! ॥ १२४ ॥
तयाऽपि तन्मुनेर्वाक्यं स्वीकृतं हर्षयुक्तया । गुरूणां वचनं शिष्यैः पालनीयं विवेकिभिः ॥ १२५ ॥
श्रद्धां विश्वाससंयुक्तां स्थिरेण मनसा सह । विधाय गुरवः सेव्यास्ते हि कारणमद्भुतम् ॥ १२६ ॥
विनयमति विधाय प्रेमपूर्वं गुरूणां वचनमनतिलंध्यं पालनीयं सुशिष्यैः ।
यदि भवति विवेको वर्तते चेच्छुभाशा, गुरुचरणसरोजे वस्तुमिष्टा यदीच्छा ॥ १२७ ॥
मामवोचन्मुनिः पश्चात्साध्वीमेतां प्रपूजय । एषा ते व्रतदानं च पालनं संकरिष्यति ॥ १२८ ॥
पञ्चमहाव्रते धर्मे साफल्यं प्राप्तवत्यसौ । साध्वीयं सुव्रता नाम्ना सद्गुणैः सुविभूषिता ॥ १२९ ॥
मया सा वन्दिता पश्चाद्यथावद्विहितांजलिः । ललाटे तत्क्रमस्पर्शस्ततोऽकारि विनम्रया ॥ १३० ॥
परमगुरुकृताज्ञाऽऽराधनस्याऽनुरोधाद् गुरुगुणविहिताऽऽर्या सेवनीया प्रयत्नात्
तदितरचरणस्पर्शो नैव योग्यो यदस्याः विमलमपि चतुर्थं पाल्यते सद्व्रतं च ॥ १३१ ॥

मोक्षसोपानमारोढुं भक्तियुक्तेन चेतसा । भवाटवीभ्रमक्लान्तस्वान्तया शान्तये वदा ॥ १३२ ॥
स्वदर्शनमनोहरं विषयवृक्षवाटीवृतं, रुषा वसति नागिनी मदगजोऽस्ति यत्र भ्रमन् ।
न यत्र पथि निर्गमो भवति मूर्च्छितो मोहतः, भवाभिधमहावनादति बलो हि यो निःसरेत् ॥ १३३ ॥
अहं तु केवलं धर्मं वीतरागैः प्रकाशितम् । दर्शयिष्यामि मुक्त्यर्थं प्रदाय देशनां शुभाम् ॥ १३४ ॥
सापि मामभिलक्ष्याथ ददावाशीर्वचः शुभाम् । अतिदुष्करमेतद्धि भूयते सफलं व्रतम् ॥ १३५ ॥
यदि त्वं शुद्धचित्तेन धर्मे यत्नं करिष्यसि । निर्वाणपदवी लभ्या त्वया तर्हैव नान्यथा ॥ १३६ ॥
यदि शुभमनसा त्वं त्यक्तलोभाऽभिकांक्षा, अहितहितसमाना धर्ममाराधयित्री ।
तव विमलगुणाया दुर्लभो नैव मोक्षः, कुरु तदिह समत्वे शुद्धधर्मे प्रयत्नम् ॥ १३७ ॥
गुरूपदेशश्रवणं व्रतेच्छा, निमित्तमात्रं मुनिभिर्निरुक्तम् । स्वयत्नसाध्या प्रथिता तु मुक्तिस्तद् यत्नवान् मुञ्चति कर्मपाशम् ॥
" अमंदवैराग्यनिमग्नबुद्धयः तनूकृताशेषकषायवैरिणः । ऋजुस्वभावाः सुविनीतमानसा भजन्ति भव्या मुनिधर्ममुत्तमम् " ॥
ततोऽवोचमहं 'पूज्ये ! जन्ममृत्युभयावहे । भ्रमणाद् भवकान्तारे भीताऽस्मि बहुदुःखदात् ॥ १४० ॥
अतस्ते वचनं मान्यं करिष्याम्येव सर्वथा । 'त्वामेव भवपाथोधि-तारिणीं वेद्म्यहं पुनः' ॥ १४१ ॥
गुरुरेव महत्तत्त्वं गुरुरेवोपकारकः । गुरुरेव । समुद्धर्ता गुरुस्तत्त्वनिवेदकः ॥ १४२ ॥
" विना गुरुभ्यो गुणनीरधिभ्योस्तत्त्वं न जानाति विचक्षणोऽपि ।

आकर्णदीर्घाऽऽयतलोचनोऽपि, दीपं विना पश्यति नान्धकारे " ॥ १४३ ॥
यः संसाराग्नितप्तानामुद्धारं विदधाति सः । गुरुः पूज्यतमो लोके चोभवीति भवान्तकृत् ॥ १४४ ॥
अधिकगुणगरिष्ठः साधिताऽर्थाद्यभीष्टः विदलितहृदनिष्टः श्रीगुरुः सत्प्रतिष्ठः ।
भवविघटनकारी मोक्षमार्गप्रचारी महदतिशयपूज्यस्तत्स्मृतः पूज्यपादः ॥ १४५ ॥
धर्माणामुपदेशेन तथैवाऽऽचरणेन च । गुरुः पूज्यतमो लोके, मान्यते शास्त्रवेदिभिः ॥ १४६ ॥
मया प्रयाणकालेऽथ दीप्तदेहस्तपोंऽशुभिः । मुनिरेष मया भक्त्या श्रद्धापूर्वं नमस्कृतः ॥ १४७ ॥
" मुनीनां वन्दनं धर्मदेशिनामर्हतां " तथा । मोक्षलक्ष्मीप्रदातॄणां सर्वमङ्गलकारकम् ॥ १४८ ॥
अहितहित इति द्वे लोकतत्त्वे यदास्तस्त-दुभयमपि नस्ते मोक्षलक्ष्मीप्रदानाम् ।
परमिह शुभसौख्यं वर्तते तेन शास्त्रे प्रभवति किल मोक्षः कारणं मङ्गलानाम् ॥ १४९ ॥
मोहनैमुख्यमापन्नं सुगृहीतव्रतोत्तमम् । वणिग्मुनिं च तं नत्वा प्रयाणं कृतवत्यहम् ॥ १५० ॥
नारीमात्रनिवासाऽर्हे काष्ठागारेऽस्तकल्मषे । आर्यया सह वासाय नगरं प्राचलं मुदा ॥ १५१ ॥
नभोविभूषणं भानुर्दिशं तावत् समाश्रयद् । वारुणीं विश्रमायेव दीर्घं संचरणश्रमात् ॥ १५२ ॥
" नव कुङ्कुमाऽरुणपयोधरया, स्वकारावशक्तरुचिराम्बरया—अतिशक्तिमेत्य वरुणस्य दिशा, भृशमन्वरज्यदतुषारकरः ॥

रहो निशायामुदयन्कुभावो व्रताद् ध्रुवं च्यावयते तदस्याम् । सम्यग् विचारं परमेष्ठिमंत्रं स्वाध्यायमेकाग्रमनाः प्रकुर्यात् ॥ १५४ ॥

ज्ञानवैराग्ययो वार्ता कुर्वन्त्या श्रद्धया तदा । विज्ञाता न गताः रात्रिर्मयाऽऽनन्दितचित्तया ॥ १५५ ॥

विरतिरससमोतप्रोतपूज्या वचोभिः, श्रवणरसवशाऽहं श्रोत्रमात्रेन्द्रियाऽऽसम् ।
स्मृतिरियमधुनापि ह्लादयत्येवचित्तं, निजनिजपरविज्ञाः केवलानन्दमग्नाः ॥ १५६ ॥

पटुगतिहरणीयं दीर्घदृष्टिः सशंका, वसति विपिनदेशे सत्वरोत्फालचाला ।
मधुरववरवीणा तारझंकारचित्ता, श्रवणरसमुपेता कां दिशां नैव विन्ते ? ॥ १५७ ॥

द्वितीयदिवसे साधुः शिष्यवृन्दसमन्वितः । स्थानं किमप्यनिश्चित्य विजहार महीतले ॥ १५८ ॥

संगस्त्वनर्हः कथितोऽस्ति शास्त्रे स धर्मिणां किन्तु सुखाय संगः । वर्षामृते नैव वसन्ति सन्तो विहार एषां परमः प्रियोऽस्ति ॥

प्रवर्तिन्या तथा दत्ता मह्यं शिक्षाऽनुकम्पया । द्विधा अपि प्रमोदेन चरणकरणादिका ॥ १६० ॥

आसेवनग्रहणभेदविभिन्नरूपा, लोकोत्तरा गुणवती द्विविधाऽस्ति शिक्षा ।
शास्त्रान्तरालगतशुद्धरहस्यविद्भिः संमण्यते मुनिवरैः करुणाऽनुरूपैः ॥ १६१ ॥

दृढा तपोविधानेऽहं वैराग्यामृतवासना । जाता निर्वाणमार्गैक–प्रियोत्साहप्रपूरिता ॥ १६२ ॥

चारित्रे वर्तमानैवं विहरन्ती प्रतिस्थलम् । साध्वीभिः शुद्धशीलाभिः समायाताऽत्र साम्प्रतम् ॥ १६३ ॥

राजगृहमिदं धन्यं नगरं धार्मिकैर्युतम् । षष्ठपारणकं कर्तुं भिक्षार्थं समुपागता ॥ १६४ ॥
श्रेष्ठिनि ! कथितं सर्वं तव प्रश्नानुसारतः । इहाऽमुत्र समुद्भूतं सुखंदुःखं च वर्णितम् ॥ १६५ ॥
परिणामे च यज्जातं तत्सर्वं सुनिवेदितम् । कोऽत्र लंघयितुं शक्तो बलीयो दैवशासनम् ॥ १६६ ॥
हरिश्चन्द्रोऽपि राजेन्द्रश्चण्डालं यदसेवत । तेन सर्वत्र दैवाज्ञा दुर्लंघ्या सद्भिरादृता ॥ १६७ ॥
तीर्थेशा अथ चक्रवर्त्तिनिवहा वासुदेवादयः, सर्वे ते किल दैवशासनवशीभूता इहोर्वीतले ।
तत्के वा बलवत्तरा न कुरुते दैवं च यान्स्ववशे, दुर्लंघ्यं किल दैवशासनमिदं शक्तश्च को लंघने ॥ १६८ ॥
तन्नात्र विस्मयः कार्यो भवचक्रं हि तादृशम् । तूर्णं तद्विषमं हातुं यत्नः कार्यो विमुक्तये ॥ १६९ ॥
चक्राकारे भवेऽस्मिन्नभिमतविमतादिप्रकारप्रपञ्चे, तत्प्रान्तस्थक्रमेण स्वविधिवशतयाऽऽयान्ति यान्ति स्वभावात् ।
सर्वो भावः स्वकीयो भवति परिणमन् नात्र शंकाऽवकाशः। राजा रंको मनुष्यः पशुरथ जननी जायते यत्र जाया ॥ १७० ॥
कृत्स्ने तरङ्गवत्यैवं, स्ववृत्तान्ते निवेदिते । श्रेष्ठिपत्नी मनस्येवं विस्मयेन व्यचिन्तयत् ॥ १७१ ॥
दुष्करं सुकुमार्याऽपि कृतं कर्माऽनया भुवि । अहो ! सुकोमलं वर्म तारुण्यमपि शोभनम् ॥ १७२ ॥
उभे ते व्रतचर्यायाः परौ शत्रू स्मृतौ बुधैः । तथापि धैर्यतो दूरीकृत्य सर्वप्रलोभनम् ॥ १७३ ॥
अगाधमब्धि खमनन्तपारं दारिद्र्यदैन्यं च तरन्ति धीराः । आरब्धकार्यं च समापयन्ति, धैर्यं विना नाऽप्यलभन्त किंचित् ॥

गृहीता या कथमस्यात्तपश्चर्याऽतिदुष्करा । प्राह–'तां श्रेष्ठिनी पश्चाच्छ्लक्ष्णं मधुरया गिरा ॥ १७५ ॥
कुशुतसया मया पृष्टो वृत्तान्तो दीक्षिते ! तव । तेन योऽजनि ते क्लेशस्तदर्थं मां क्षमस्व वै ॥ १७६ ॥
" साधवः सुव्रताचाराः प्राणिषु हि दयालवः ' । ब्रुवाणैवं तदीयांघ्रि–पद्मयोर्न्यपतत्तथा ॥ १७७ ॥
अपारभवकान्तार–दुःखिताऽचकथत्पुनः । संसारपंकसंमग्ना मोहान्धतमसाऽऽवृता ॥ १७८ ॥
भवग्राहदंष्ट्रा गृहीताऽबलानां प्रयत्नो जिनानां वचस्येव कार्यः । समुद्दिश्य सम्यक् गृहीतव्रतानां पदोपासना दुर्गतेर्नाशनाय ॥
कर्मभिर्भ्राम्यमाणाश्च प्राप्स्यामः कां गतिं वयम् । त्वया तु प्राक्तनैः पुण्यैरुत्तमं भवतारकम् ॥ १८० ॥
साधुव्रतं गृहीतं तच्छाधि नः शरणं गता । पुनर्जन्मादिकक्लेशस्तोमो लीयेत येन हि ॥ १८१ ॥
" ततस्तरङ्गवत्याह श्रेष्ठिनि ! त्वं मुनिव्रते । न शक्ता चेद् गृहाणाऽथ गृहिधर्मं जिनोदितम् ॥ १८२ ॥
' सकलविरतिरेषा सर्वथोपासनीया, भवति यदि न शक्तिस्तत्तदंशोऽपि रम्यः ' ।
न वरमविरतानां जन्म भोगाऽभिभूतं, भवति परिणतौ यत् श्वभ्रपातादिदुःखम् ॥ १८३ ॥
' साध्व्यास्तस्या निशम्यैतत्पीयूषसदृशं वचः ' । मुमुदे श्रेष्ठिनी तेन मेने तस्याः कृपाभरम् ॥ १८४ ॥
विनिश्चित्य ततः श्रद्धा–पूर्णया गृहिणां व्रतम् । अङ्गीकृतं यया जैन–सिद्धान्तप्रतिपादितम् ॥ १८५ ॥
सजीवान् रक्षितुं सा च सजीवाऽजीवयोर्भिदाम् । जानाति स्म विशेषेण जिनधर्माऽनुसारिणी ॥ १८६ ॥

गृहिव्रतानि पञ्चैवमपरा सत्क्रिया अपि । धर्म्या नैकविधा श्रेष्ठाः स्वीकरोति स्म सा तदा ॥ १८७ ॥
नवयौवनशालिन्यो दास्योऽपि श्रुततत्कथाः । अर्हद्दिष्टाऽघसंरूढश्रद्धाधर्मं प्रपेदिरे ॥ १८८ ॥
" विवेकबलदुर्बलस्मयमनोजलोमादयः, भवोद्भवमहाभयाऽऽकलितचेतसो ये नराः ।
तृषाविकलचेतसां जलमिव प्रियं प्राणिनां, जिनेश्वरवचोऽमृतं भवति जातु पुण्यात्मनाम् ॥ १८९ ॥
जिनेश्वरोपदेशं च सादरममृतोपमम् । निपीय निर्मलस्वान्तास्तस्मिन्नेवाऽभवत् स्थिराः ॥ १९० ॥
साध्वी स्वसहचारिण्या ततो भिक्षां निजोचिताम् । जग्राह प्रासुकां दृष्ट्वाऽगमत्स्वस्थानमीर्यया ॥ १९१ ॥
" साधुत्वसाध्यगमनेन सुभाषया च, वेषानुभावविनयादि गुणेन युक्ता ।
धर्म्यान् जनान् सपदि कर्त्तुमसौ प्रवीणा धर्मस्थिरा किल तरंगवती सुसाध्वी " ॥ १९२ ॥
श्रोतॄणां वाचकानां च सम्यग् ज्ञानाऽऽप्तये मया । कथेयं कथिता शस्ता जैनतत्त्वसमन्विता ॥ १९३ ॥
अस्याः श्रवणमात्रेण " दुरितान्यखिलानि वै । दूरीभवन्तु " चित्तानि रमन्तां जैनशासने " ॥ १९४ ॥
' पुराभवमह ! मोह–जन्यानि दुरितानि मे जैनधर्मप्रभावेण ' नाशं गच्छन्तु सत्वरम् ॥ १९५ ॥
भव्या ! भव्यमतिं प्राप्य कथामेतां सुनिर्मलाम् । शृण्वन्तु सादरं येन श्रेयः सद्यो विजायते ॥ १९६ ॥

उपाश्रयान्वगमनादनन्तरं, सदा निमग्ना त्वप्रमादयोगे। चारित्रनिष्ठाक्रमतो गुणानां शुद्धिं परां चेतसि साधयन्ती ॥ १ ॥
धर्मविधानप्रयता च शुक्लध्यानस्थिता नाशितघातिकर्मा। तरंगवत्यल्पतरेण काले–नैव प्रपेदे किल केवलित्वम् ॥ २ ॥
सहस्रपत्रे सुरनिर्मितेऽब्जे स्थित्वा प्रभूतान् भविनः प्रबोध्य। सा ध्यानयोगात्परिभूतबाधां निर्वाणनिःश्रेणिमथाऽऽरुरोह ॥ ३ ॥
धर्मापको धर्मगुरुस्तदीयः पतिः पुरागो मुनिपद्मदेवः। उभौ समाराध्य शुचिव्रतानि समीयतुः केवलिनौ च सिद्धिम्॥ ४ ॥
मातापिताऽथ श्वशुरौ च तस्याः सुश्राविका धर्ममनाश्च सोमा। स्वर्गं गताः सार्धमणुव्रतस्थाः सेत्स्यन्ति चैते तु महाविदेहे ॥५॥
चण्डप्रद्योतनृपभार्याऽङ्गारवतीदुहिता पतिधर्मा। वासवदत्तोदायनसुराज्ञी धर्मरता सुगतिश्च बभूव ॥ ६ ॥
स वत्सराजोदयनोऽपि सम्यक्धर्मस्य लेभे फलमिष्टलोकम्। तत्संगिनी सारसिकाऽपि जैन–व्रतेहिनी सद्गतिमाप्स्यतीष्टाम् ॥७॥
श्रीकोणिकाऽवेर्मगधाधिभर्तुः श्रीवत्सराजोदयनस्य काले। तरंगवत्त्याः प्रकटंगताया इयं कथा ख्यातिमवाप लोके ॥
सा पाठकान् विस्मयिनः करोति श्राद्धांश्च धर्मे प्रयतान्विधत्ते। निर्वापयन्ती विषयान् कषायान् देशे पुरे सर्वजनप्रियाऽभूत् ॥ ९ ॥

१ अविनाशे रवौ मेषे शैलमूषिककम्बले ॥ इतिमेदिनी ॥





## प्रशस्तिः ( १ )

हर्षपुरीयगच्छे बभूव सूरिः श्रीवीरभद्रो हि । तच्छिष्यनेमिचन्द्रो जग्रन्थ प्राकृते कथां रम्याम् ॥ १ ॥
सच्चारित्रवतां श्रेष्ठस्तपागच्छशिरोमणिः । बुद्धिसागरसूरीन्द्रः शास्त्रागमविदांवरः ॥ २ ॥
तत्पादपङ्कजालिः श्री–सूरिरजितसागरः । प्रसिद्धवक्ताऽभूद्भव्य–प्रबोधनपरायणः ॥ ३ ॥
रचिता गीर्वाणगिरा तेनैवेयं ततः सुबोधाय । पठनोत्सुकभव्यानां । विनेयहेमेन्द्रसागराऽर्थनया ॥ ४ ॥
चम्पूमयी कथेयं स्यादित्यासीन्महाभिलाषो मे । पद्यैस्तथापि दृब्धा मन्दधियामपि यथा भवेद्बोधः ॥ ५ ॥
पाण्डित्यकाङ्क्षी नहि निर्मितिं व्यधाम्, जनान् समुद्धेतुमयं मम श्रमः । ग्रन्थान्तराणां वचनानि चान्तरा, न्यवेशयं ज्ञानविवृद्धये सताम्
लब्धेन कारुण्यकणान् मनीषिणां, ज्ञानस्य लेशेन च यत्नमादधे । विवेकदीपेन मनो गुहातमो, यथा विलीनं भविनां प्रजायतेः ॥
नेत्रवस्वङ्कभूसंख्ये ( १९८२ ) विक्रमार्कस्य हायने । माघवस्य सिते पक्षे पूर्णिमायां गुरोर्दिने ॥ ८ ॥
रोहिणीगे विधौ भव्ये मुहूर्ते विजये वरे । मधुपुर्यां समाप्तेयं कथा बोधविधायिनी ॥ ९ ॥
पुरीयं सर्वदा भव्या भव्यानामुपकारिणी । विद्यापुरसमीपेऽस्ति महत्त्वा सुमनोहरा ॥ १० ॥
तुङ्गोत्तुङ्गतरंगधौतविषमप्राकारलम्बत्तटा, नानारंगविहङ्गवृन्दमिलिताऽरण्यद्वयी सच्छटा ।

स्वच्छस्वादुपवित्रवारिवहनप्राप्तोरुयादो यशाः, शान्ता स्वाभ्रमती नदी परिसरे यस्याः सदा राजते ॥ ११ ॥
क्वचिद् रेणवो वेणवोऽरण्यजाताः, क्वचिद् वारिविद्योतमाना विहंगाः ।
क्वचित्स्वच्छवस्त्रावृता पौरनार्यः, शिरस्यात्तपानीयकुम्भाश्चलन्ति ॥ १२ ॥
क्वचित्स्नान्ति विप्राः स्वधर्मं विधातुं, तरुण्यः क्वचिद् वै रमन्ते रसेन ।
क्वचित्सारसी सैकते सारसेन, सुखं क्रीडति क्रीडया स्वच्छभाजा ॥ १३ ॥
मन्दिरं शोभते तुङ्गं यत्र पद्मप्रभोर्वरम् । भव्येष्टपूरको घण्टा-कर्णवीरश्चकास्ति च ॥ १४ ॥
श्रद्धालवः समायान्ति नानादेशविदेशतः । आम्रश्रेण्या सदा रम्या देशाश्चेतो हरन्ति हि ॥ १५ ॥
मधुरैश्च पिकालापैर्मुग्धतां यान्ति देहिनः । कवीनां च कवित्वं वै द्विगुणं यत्र वर्धते ॥ १६ ॥
बुद्धिसागरयोगीन्द्र-सुन्दरध्यानमन्दिरम् । जिज्ञासां योगमार्गस्य दिशत्येव निरन्तरम् ॥ १७ ॥
चरितं तरङ्गवत्या विशदं भवरोगहारकं सततम् । जयतु जगत्यामेतद्यावच्छशधरदिवाकरोद्योतः ॥ १८ ॥
उदयतु वसुधायां सन्ततं " बुद्धि " सूर्यः, प्रसरतु च तदीयं दिव्यतेजोऽ "जितं " वै ।
विकसतु शुचि भव्यस्वान्त " हेमाम्बुजा "ऽऽलि,-विलसतु रमणीया मोक्ष " लक्ष्मी "रजस्रम् ॥ १९ ॥
मङ्गलं भगवान्वीरो मङ्गलं गणनायकाः । मङ्गलं धर्मशास्त्राणि जैनधर्मोऽस्तु मङ्गलम् ॥ २० ॥

## प्रशस्तिः ( २ )

—॥०॥—

श्रीतीर्थंकरनामकर्मपरिपाकाऽत्राऽऽप्ततीर्थेशतो–जातो ज्ञातकुलेऽन्तिमो जिनवरः श्रीवर्द्धमानप्रभुः ।
तत्पट्टेऽर्हतगाऽर्हतो गणधरैर्ये संवरक्षाविधौ, ज्ञात्वा स्थापितवान् चिरायुरुचितः स्वामी सुधर्माऽभवत् ॥ १ ॥
बोधयन्तं जगच्छिष्यपरिपाटिं वचोऽमृतैः, संवायाऽर्पितशर्माणं सुधर्माणं स्मरेन्न कः ? ॥ २ ॥
चतुश्चत्वारिंशत्तमविशदपट्टेऽस्य गणिनः, जगच्चन्द्राऽऽचार्योऽभवदमलतेजोऽतुलतपाः ।
य आचाम्लं चक्रे यमनियमतो द्वादशसमाः, तपागच्छे हेतुर्यदमलतपोस्तीष्टपदवी ॥ ३ ॥
यत्तपस्तर्पितस्वान्वा तपागच्छमहानदी । वर्धतेऽद्यापि तं वन्दे जगच्चन्द्रं महागुरुम् ॥ ४ ॥
कर्मग्रन्थिदुरूहतावशनिरुत्साहोत्थखेदश्लथान्, लोकानाऽऽगममार्गमूढमनसो वीक्ष्य कृपार्द्रोऽथ यः ।
कर्मग्रन्थचयाँश्चकार निरती(ति)चारक्रियाश्चाऽऽचरन्, तत्पट्टोदयहेतवे समभवद्देवेन्द्रसूरिः प्रभुः ॥ ५ ॥
कर्मग्रन्थरहोभावविकासनविभाकरः । देवेन्द्रसूरिनर्थं तं वन्दन्ते कर्मवेदिनः ॥ ६ ॥
प्रामाण्यं पदवाक्ययोर्विशदयन्यो व्याकृतिं निर्ममे, विद्यानन्दविभुर्बभूव वरदस्तत्पट्टसंदीपनः ।
तत्पट्टेऽथ बभूव धीरधिषणः श्रीधर्मघोषाभिधः, सूरीन्द्रो यदनिन्द्य नाम जगति प्रामाविकं श्रूयते ॥ ७ ॥

विद्यानन्दधर्मघोषौ वन्दे सूरीन्द्रसत्तमौ । ज्ञानेन क्रियया याभ्यां मोक्षमार्गः स्थिरीकृतः ॥ ८ ॥

तत्पट्टपूर्वाद्रिरविर्महीयान् विद्वत्सु सोमप्रभसूरिरासीत् । सोमादिमश्रीतिलकाख्यसूरिः तत्पट्टगोऽभूत्समगच्छमान्यः ॥

विद्वान्प्रभाधरवरश्च तदीयपट्टे श्रीदेवसुन्दरकृतीवरसूरिरासीत् । प्रभावको महिमशालिमुनीन्द्रमध्ये यन्नाम गायतितरां गुणगृह्यसंघः ।

तारंगशैलशिखरे जिनराजमूर्त्ती–र्योऽतिष्ठिपत्स उचितातिसमृद्धियोगात् ।

श्रीसोमसुन्दरगुरुर्मुनिसार्वभौमः, तत्पट्टभाग्यतरणिः समभूत्प्रभावी ॥ ११ ॥

सहस्रावधानेन लोकान् जयन् यो चकार प्रभूतान् महाग्रन्थराशीन् ।

मुनेः सुन्दरः सूरिवर्यो महात्मा, स तत्पट्टपूर्वाद्रिसूर्यो बभूव ॥ १२ ॥

तदीयपट्टे गुरुरत्नशेखरः सूरीन्द्रवर्यः प्रबभूव बुद्धिमान् यः शुद्धचारित्रधरोऽप्यनेकशः ग्रन्थाश्चकाराऽतिमप्रवृत्त्या ॥ १३ ॥

लक्ष्मीसागरसूरीन्द्रस्तत्पदेऽभूत्प्रभावकः । जिनबिम्बप्रतिष्ठायाः कारको निस्तारकः ॥ १४ ॥

तत्पट्टे सुमतिः साधुः सूरीन्द्रोऽभवदुज्ज्वलः । तत्पट्टे हेमविमलः सूरीन्द्रो विमलक्रियः ॥ १५ ॥

तदनु च विमलाऽऽनन्दाऽभिधः सूरिराजः । तपसि सदनुरागो यः क्रियोद्धारकर्ता

विहितसफलयत्नः शुद्धचारित्रकार्ये । विमलगिरिवरे यश्चक्रिवान् संघयात्राम् ॥ १६ ॥

श्रीमद्विजयदानाख्यः सूरीन्द्रस्तत्पदेऽभवत् । यच्छिष्योऽत्यन्तमेधावी श्रीहीरविजयोऽभवत् ॥ १७ ॥

विद्यासिद्धिचरित्रतादिसुगुणैराकृष्य विद्वज्जनान्, स्वायत्ते भुवने ततान परितो यो जैनधर्मं विभुः ।
प्राप्तोऽकब्बरतो ' जगद्गुरु 'रिति श्रेष्ठामुपाधिश्रियं,—मार्यास्तीर्थकराच्च मोचितजनोऽसौ तस्य पट्टे बभौ ॥ १८ ॥
विविधधार्मिककृत्यविधायको नृपतिशाहवरात्करमोचकः । विजयसेनगुरुर्वरसूरिराट् तदनु तस्य पदेऽभवदुज्ज्वलः ॥ १९ ॥
तत्पट्टे गुणगौरो जातः श्रीविजयदवसूरीन्द्रः । यं च जहांगिरनृपः सपादहीरेति कीर्तितवान् ॥ २० ॥
तपस्वी च प्रभाशाली विजयी देवसूरिराट् । समाचारी विशुद्धा च यस्येदानीं प्रवर्तते ॥ २१ ॥
सहजसागरनामकवाचकस्तदनु तत्पदपट्टमधिश्रितः । विजयहीरगुरुक्रमसेवनात् सहजसिद्धिमवाप दयाधनः ॥ २२ ॥
तच्छ्रीमतो विशदपट्टपरम्परायां श्रीनेमिसागरगुरुः प्रबभूव धीमान् ।
उत्सार्य कृत्यशिथिलत्वमसौ मुनीन्द्रः संवेगिसाधुनिवहं विदधे स्वतन्त्रम् ॥ २३ ॥
तत्पट्टपालनपरो रविसागराह्वः, शान्त्या महाव्रतविधानदृढाऽनुरक्तः ।
सत्कर्मणा वचनसिद्धमवाप येन, लक्ष्मीप्रसादमतुलं जनताऽपि लेभे ॥ २४ ॥
शान्तप्रभावी गुरुभक्तिपूर्णः सेवाविधौ नम्रतया प्रवृत्तः । वाक्सिद्धिसिद्धः सुखसागराऽऽह्वस्तत्पट्टशोभामतुलं ततान ॥
रूपेणाऽप्रतिमेन सुस्वरवता वाक्यप्रयोगेण च, प्रायः साऽवहितेन मेध्यमनसा विश्वत्रिकं योऽजयत् ।
यश्चाऽष्टोत्तरपुण्यपुस्तकशतं चक्रे महायोगविद्, आचार्योत्तमबुद्धिसागरमहाराजोऽभवत्तत्पदे ॥ २६ ॥

भारतादिषु विख्यातो योगविद्याविचक्षणः । बुद्धिसागरसूरीन्द्रस्तेनेऽध्यात्ममतोन्नतिम् ॥ २७ ॥

तच्छिष्यः कविकोविदो विदितवक्ता शान्तमूर्त्तिर्महान्, नानाग्रन्थविधानपाटवधरः सौम्यप्रभाभासुरः ।
तत्पट्टेऽजितसागराऽभिध उदारः सूरिवर्यो बभौ, दृब्धा येन च पूरिता मधुपुरीमध्ये वरेयं कथा ॥ २८ ॥

भावैर्भृता वरतरंगवती कथेयं, श्रीपादलिप्तमुनिना( सूरिणा )रचिता प्रकृत्या ।
पश्चादनेककविसाधुभिरिष्टवाण्या, संवर्धिता जगदिदं परमं पुनाति ॥ २९ ॥

दीक्षागुरोरजितसागरसूरिवरेः शिष्याणुना निवसता समवाप्य हर्षम् ।
हेमेन्द्रसागरमहात्मसुवाचकपुङ्गवेन, दिव्यात्ममग्नमनसा रचिता प्रशस्तिः ॥ ३० ॥

रसखखकरवर्षे( २००६ )वैक्रमे मासि माघे धवलितदलपंचम्यामथैतत्कथायाः ।
जिनवरगुरुधर्माराधकश्राद्धपूर्णे प्रथमनवप्रसिद्धिर्नाम्नि विद्यापुरेऽभूत् ॥ ३१ ॥



श्रीमद् बुद्धिसागर सूरि
जैन ज्ञान मंदिर
विजापुर

इति श्रीतपागच्छाधिपतियोगनिष्ठाऽध्यात्मज्ञानदिवाकरशास्त्र-
विशारदजैनशासनप्रभावकश्रीमदाचार्यवर्यश्रीबुद्धिसागर-
सूरीश्वरचरणसरोजचञ्चरिकायमाण-प्रसिद्धवक्तृ-
व्याख्यानवचस्पतिकविकोविद-जैनाचार्यश्री-
मदजितसागरसूरिणा संस्कृतभाषया
रचितेयं तरङ्गवतीकथा समाप्ति-
मगात् ॥